* ओ३म् *

श्रीकांगड़ीगुरुकुलविश्वविद्यालयगीर्वाणवाणीग्रंथावल्याम्—

# साहित्य सुधासंग्रहस्य

## द्वितीय बिन्दुः



गुरुकुलाऽऽचार्यमहोदयस्याऽऽदेशात्

बिजनौरमंडलान्तर्गत हल्दौरग्रामवास्तव्येन

**श्रीभवानीप्रसादेन**

गुरुकुलसाहित्याध्यापकेन

**श्रीवागीश्वर विद्यालङ्कारेण च**

संगृहीतः



१९८३ श्रीवैक्रमाब्दे प्रथमा

* ओ३म् *

# * साहित्य सुधा संग्रहस्य *

## द्वितीयबिन्दोर्भूमिका



अयिगीर्वाणवाणीप्रणयिनः सुहृदयमहाभागाः !

नैदं न विदितं विद्वद्वराणां श्रीमतां

यदद्यत्वे सर्वतः सर्वैरवधीर्यमाणा कां दयनीयदशामुपेयुषीयमशेषभाषाभूषाभूता सुरवरसत्कृता भारतीय भारती। यस्यां, हि गिरि स पूर्वेषामपि गुरुः प्रथम-संप्रदाय-प्रवर्त्तको भूतभावनो जगदेक-पावनो भगवान् विद्योतयामास निरवद्यामतिहृद्यां वेद-विद्याम्। यस्यां मातृभाषायां बाल्यस्वभाव-सुलभ-स्खलितललितैरव्यक्तवर्णरमणीयैर्जल्पितैरनल्पहर्षवर्षमकार्षु महर्षयो निज-जननी-जनक श्रवण शष्कुलीषु। यस्यां वाल्मीकि व्यास कालिदास प्रभृतयः कविकोकिला विपञ्ची-व्यञ्जन-चतुरं पञ्चममुदञ्चयन्तो न्यषिञ्चन्सहृदय-हृदयेषु पीयूष यूषम्। यस्यां प्रत्यक्षीकृतमन्त्रैः सर्वतन्त्र-स्वतन्त्रैरपास्त-समस्तसंशीतितमस्कै मैत्र्यादिभाव भावना प्रसादितमनस्कैः प्रशमपथ-पथिकप्रशस्यानि सरहस्यानि प्रणीतानि ब्राह्मणानि ब्रह्मविद्भि ब्राह्मणैः। यस्यां, जगति गृहीत-मनुष्य-जनुषां पुरुषाणां कः परमपुरुषार्थ इतिविचारणाचणै र्विचक्षणैः कपिलकणादादिभि र्निरूपितं स्वरूप-मभ्युदयनिःश्रेयसयोः। किं बहुना, यस्याम्, ऐहिकामुष्मिक-सकल प्रयोजनौपयिकार्थशास्त्र, परमार्थशास्त्र, धर्मशास्त्र, नीतिशास्त्र,

ज्यौतिषा ऽऽयुर्वेदादिकं न किञ्चिन्न गुम्फितं निसर्गदयार्द्रहृदयै-र्महोदयै र्जगदुद्दिधीर्षुभिः सर्वहितचिकीर्षुभि रस्मत्पूर्वजैः प्राज्यप्रज्ञैः स्वोपज्ञं ज्ञान-विज्ञान-जातम् ।

परं धिग्विधेरविधेयताम् । यतः सैव सर्वभाषा जननी कमनीय-तमा ऽमृतमयी सत्यपि अद्य मृतभाषेत्यभिधीयमाना मानवै रवमन्य-माना नाभिनन्द्यते । येषांकृते भगवता पतञ्जलिना ऽलेखि- "ब्राह्मणेन निष्कारणो धर्मःषडङ्गो वेदो ऽध्येयो ज्ञेयश्चेति" तेऽपि दुर्वासनावासि-तान्तः करणाः "वरमद्यकपोतःश्वो मयूरात्" इति न्याय मनुसरन्तो-ऽप्यन्याय मनुसरन्तो ऽयमेव लोको ना ऽपर इति दृढं विश्वसन्तः पश्यन्तो ऽपि न पश्यन्तः आपातमधुरं क्षणिकैश्वर्यमेव सर्वस्वं मन्यमाना अग्रजन्मानो ऽपि हरिपर्णभाषावधू-प्रसाधन- व्यग्रजन्मानो विडम्ब्यन्ते सन्ततमिति कैव कथा ऽवरेषां परेषाम् ।

परं नैकान्ततो ऽत्र मन्तूयन्ते पाठका यदेत्यपि मुक्तकण्ठ-मुररीक्रियते मया । यतो देवगिरमधिजिगांसमाना अपि जना न पारयन्ति तां पठितुं समुपयुक्त-पाठ्यपुस्तका-नामभावात् । कानिचित् समुपलभ्यमानान्यपि पुस्तकानि नोपे-क्षणीयाऽक्षोदीयोदोषराशि लाञ्छितानीति हन्त का गतिः । सन्ति हि पठनपाठनयोः प्रायेण प्रयुज्यमानानि प्रचुराणि गद्यपद्य तदुभय-मयानि च काव्यानि परं सर्वाण्येव तानि तथा शृङ्गार-तरङ्गितानि यथा नववयस्कानां सुकुमारमतीनां कुमार-कुमारीणां करयो-र्निःशङ्क मर्पयितुं न पार्यन्ते । न च तानि शालीनो गुरुः शिष्यान्, पिता पुत्रं, भ्राता भगिनीं वा विशकलय्य पाठयितुं प्रभवतीति ना ऽत्युक्तियुक्तेयमुक्तिरभियुक्तानाम् ।

इतिसर्वा मनर्थ परम्परां परामृश्यैव गुरुकुल -विश्वविद्याल-

यस्या ऽऽचार्यवर्येण प्रेर्यमाणा वावां प्रावर्त्तिष्वहिद्गूढ़तराध्यवसाय-वज्जनसाध्ये बहुपाये ऽयस्मिन्महति व्यवसाये महाविद्यालय विभा-गस्थ-विद्यार्थिना मुपयोगाय संस्कृतसाहित्य-संग्रह-संपादनकार्य-रूपे । अन्यएव योग्यतरः कश्चिन्महानुभावो निरवद्यमेत्कार्य-मिदं तर्हि समीचीनतरमभविष्यत् । यतो हि नीरक्षीर-विवेके हंसाना मेव क्रमते मति र्न सर्वेषाम् । तथापि तद्भावे—"भवे हि सर्वथा ऽभावात् किञ्चिद्भावो विशिष्यते" इति, "अकरणान्मन्द करणं श्रेयः" इति वा सिद्धान्तानुसार मस्मदीयमिम मुद्योगं निष्पक्षपात-चक्षुषा निरीक्षिष्यन्ते चेत्सन्तः कृतार्था वावां भविष्यावइति नौ मतिः ।

अस्य हि संग्रहस्य प्रथमो बिन्दुः हायनद्वयपूर्व मेव मुद्रितो विक्रयार्थं प्रस्तुतो ऽपि च गुरुकुलमुद्रणालये निहित एव दैवदुर्वि-पाकादागते गत जलप्लावने विलय मुपेयिवानिति कस्य सहृदयस्य नारुन्तुदः स्यादुदन्तः । एतादृशेषु व्यतिकरेषु "करोति यत्किंचिदपि प्रभुर्मे तदस्ति सर्वं मम मंगलाय" इति भावनयैव संतु-ष्यन्ति मतिमन्तः इति कृतं तत्कृते परिदेवनेन । तस्य द्वितीय-मुद्रणं चारुतरं भवेदिति क्रियते च तदर्थं प्रयत्नः ।

अयं च प्रस्तुतो द्वितीयबिन्दुः श्रीमतां पाणिपंकजमुपतिष्ठते । देवगिरि निरवद्यगद्यलेखनाऽभ्यासं कामयमानाना मन्तेवासिनां कृते सरसगुणरीत्यलंकारै रलंकृतां कादम्बरी मतिरिच्य न किमप्य-न्यदनुकरणार्हं वस्त्वस्तीति तस्या एव किंचिदूनः पूर्वभागः संक्षिप्य मुख्यतया ऽत्र संगृहीतः । न च कश्चिदप्यवश्यसंग्राह्यो ऽशः परि-त्यक्तः स्यादिति कणेहत्य प्रयतितम् । कादम्बरीपठनेन बाणकालिकी यादृशी दृश्यते दशा धर्म, समाज, राजनीतिक्षेत्रेषु, तद्द्योतका अंशा अपि न विसृष्टाः । बाणस्य कवितायां मेकोदोषो दोषज्ञानां सविशेषं

हृदयोद्वेग मावहति। सचाऽयं, यत्र यत्किमपि वस्तु वर्णयन् विशेषण-जालैः कथाभागं तथा पिदधाति यथा वर्षाकाल स्तृणगुल्मादिभि रुद्यान-राजीम्। तत्र च न केवलं तत्कालोपयोगिभि र्विशेषणै रेव विशेष्यं विशिनष्टि, प्रत्युत यावच्छक्य मुपलभ्यमानै र्भूतभविष्यत्स-म्बन्धिभिरपि व्यतिकर निकरै रवकरमिव करोति। अयमादीनवोऽस्य सुधासमधुरायां मधुरायां कवितायां शर्करा-कर्करायते। उदाहरणार्थ-मस्य परमरमणीय मच्छोदसरोवर वर्णनमेव निर्वर्णयत। चन्द्रापीडो-ऽदृष्टचरं सरो ददर्श। अस्मिन् प्रसङ्गे— यदि तेन प्रत्यक्ष निरीक्ष्यमा-णानां वस्तूना मेव वर्णनं कविरकरिष्यत् तदा साध्वभविष्यत्। परं स्थितिः सर्वथा प्रतीपावर्त्तते। प्रत्यक्षमुपलभ्यमानैः पदार्थैः सह कवि-र्नायकेनाऽननुभूयमानानपि विषयान् वर्णयति। यथा– "आसन्न कैला-साऽवतीर्णस्य च शतशो भगवतः खण्डपरशो र्मज्जनो न्मज्जन क्षोभ-चलित चूडामणि चन्द्रखण्डच्युतेनाऽमृतरसेन जलक्षालित वामार्ध-कपोल-गलित-लावण्य प्रवाहानुकारिणा मिश्रित-जलम्" इत्यत आरभ्य— "क्वचिदैरावतदशनमुसलखण्डितकुमुदखण्डम्" इति-पर्यन्तं प्रायेण सर्वाण्येव विशेषणानि निर्दिष्ट-दोषदूषितानि सन्ति। संक्षेपकरणायैतादृशि विशेषणानि दूरीकृतानि। उल्बणशृंगारां-शोऽपि सर्वथा पृथक्कृतः।

श्रीमता कृष्णमाचार्येण संगृहीतः कादम्बरी-संग्रहोऽपि आवयो-र्लोचन-गोचरोऽभूत्। आचार्य महोदयेन तत्र श्लेष विरोधाभासा-दीनां बाणशैली-वैशिष्ट्यानां नितान्त मेव परित्यागोऽकारीति सर-लतातिशयात्स संग्रहो महाविद्यालय विभागे नोपयोग मर्हतीत्यावयो-र्धारणा। तस्मादावाभ्यां द्राघीयांसि वर्णनानि लघूकुर्वद्भ्यामपि बाणप्रणाली प्राण रक्षायै विहितो विशेषः श्रमः।

अत्र च संगृहीताना मंशानां पौर्वापर्यं कत्रीनां काल-क्रमेणैव

नियन्त्रितम् । यद्यप्यद्याऽपि विवादास्पद मेव विषयोऽयं तथापि यथामति बहुविविच्य यन्निर्धारयितुं पारितं खलु तदेव श्रीमतां पुरस्तादुपन्यस्तम् । अस्मिन्त्संग्रहे समुपात्तानां काव्यांशानां तत्कवीनां च विषये पुस्तकान्ते प्रकाश्यमानासु टिप्पणीषु किञ्चिद्विवेचनं माचरिष्याव इत्यलमत्राऽप्रसक्ताऽनुप्रसक्त्या ।

अन्ते च 'गच्छतः स्खलनं क्वापीति' नयानुसार मस्मदीयप्रमादादिनिमित्तकं दोषजात मुपेक्षिष्यन्ते सन्त इति मुहुर्मुहुरभ्यर्थयेते–

द्वितीय चैत्र सुदि रामनवम्याम्
सं० १९८३ वैक्रमाब्दे
कांगड़ी गुरुकुल विश्वविद्यालयस्थ
पञ्चकुटीरे



विदुषां वशंवदौ
भवानीप्रसादः–
वागीश्वरश्च

  

# अनुक्रमणिका

| विषयाः | पृष्ठतः |
|---|---|





ॐ

# साहित्य-सुधा-संग्रहः

## द्वितीय बिन्दुः

# पुरुष सूक्तम्

सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
स भूमिꣳ सर्वत स्पृत्वात्यतिष्ठद्दशाङ्गुलम् ॥ १ ॥
पुरुष एवेदꣳ सर्वं यद्भूतं यच्च भाव्यम् ।
उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥ २ ॥
एतावानस्य महिमातो ज्यायांश्च पूरुषः ।
पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ॥ ३ ॥
त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहाभवत्पुनः ।
ततो विष्वङ् व्यक्रामत्साशनानशने अभि ॥ ४ ॥
ततो विराडजायत विराजो अधि पूरुषः ।
स जातो अत्यरिच्यत पश्चाद्भूमिमथो पुरः ॥ ५ ॥
तस्माद्यज्ञात्सर्वहुतः सम्भृतं पृषदाज्यम् ।
पशूँस्ताँश्चक्रे वायव्यानारण्या ग्राम्याश्च ये ॥ ६ ॥
तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे ।
छन्दाꣳसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ॥ ७ ॥
तस्मादश्वा अजायन्त ये के चोभयादतः ।
गावो ह जज्ञिरे तस्मात्तस्माज्जाता अजावयः ॥ ८ ॥
तं यज्ञं बर्हिषि प्रौक्षन् पुरुषं जातमग्रतः ।
तेन देवा अयजन्त साध्या ऋषयश्च ये ॥ ९ ॥
यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन् ।
मुखं किमस्यासीत्किं बाहू [illegible]

ब्राह्मणो ऽस्य मुखमासीद्बाहू राजन्यः कृतः ।
ऊरू तदस्य यद्वैश्यः पद्भ्याᳬ शूद्रो अजायत ॥ ११ ॥
चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत ।
श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत ॥ १२ ॥
नाभ्या आसीदन्तरिक्षᳬ शीर्ष्णो द्यौः समवर्त्तत ।
पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाँ २॥ अकल्पयन् ॥ १३ ॥
यत्पुरुषेण हविषा देवा यज्ञमतन्वत ।
वसन्तोऽस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः ॥१४ ॥
सप्तास्यासन् परिधयस्त्रिः सप्त समिधः कृताः ।
देवा यद्यज्ञं तन्वाना अबध्नन् पुरुषं पशुम् ॥ १५ ॥
यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् ।
ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ।१६
अद्भ्यः सम्भृतः पृथिव्यै रसाच्च विश्वकर्मणः समवर्त्तताग्रे ।
तस्य त्वष्टा विदधद्रूपमेति तन्मर्त्यस्य देवत्वमाजानमग्रे ॥१७॥
वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् ।
तमेव विदित्वाति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय ॥१८॥
प्रजापतिश्चरति गर्भे अन्तरजायमानो बहुधा विजायते ।
तस्य योनिं परिपश्यन्ति धीरास्तस्मिन्ह तस्थुर्भुवनानि विश्वा॥१९॥
यो देवेभ्य आतपति यो देवानां पुरोहितः ।
पूर्वो यो देवेभ्यो जातो नमो रुचाय ब्राह्मये ॥ २० ॥
रुचं ब्राह्मं जनयन्तो देवा अग्रे तदब्रुवन् ।
यस्त्वैवं ब्राह्मणो विद्यात्तस्य देवा असन्वशे ॥ २१ ॥
श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि ।
रूपमश्विनौ व्यात्तम् । इष्णन्निषाणामुं म इषाण सर्वलोकं
म इषाण २२ ॥ ( यजुर्वेदात् )

ऋषिः—नारायणः १—१६ उत्तरनारायणः, १७—२२ । देवता—पुरुषः १, ३, ४, ६, ८–१६, ईशानः २, स्रष्टा ५, स्रष्टेश्वरः ७, आदित्यः १७–१९, २२ सूर्यः २०, विश्वेदेवाः २१ । छन्दः—निचृदनुष्टुप् १—३, ८—११,१४, अनुष्टुप् ४, ५, ७, १२, १३, १५, २०, २१, विराडनुष्टुप् ६, विराट् त्रिष्टुप् १६, भुरिक् त्रिष्टुप् १७, १९, निचृत् त्रिष्टुप् १८, निचृदार्षीत्रिष्टुप् २२ । स्वरः गान्धारः १—१५, २०, २१, धैवतः १५—१९, २२ ।

*ओ३म्*

महाकविश्रीभासप्रणीतं

# दूतवाक्यम् ।

( नान्द्यन्ते ततः प्रविशति सूत्रधारः )

सूत्रधारः—

पादः पायादुपेन्द्रस्य सर्वलोकोत्सवः स वः ।
व्याविद्धो नमुचिर्येन तनुताम्रनखेन खे ॥ १ ॥

एवमार्यमिश्रान् विज्ञापयामि । अये किन्नु खलु मयि विज्ञापनव्यग्रे शब्द इव श्रूयते । अङ्ग ! पश्यामि ।

( नेपथ्ये )

भो भोः प्रतिहाराधिकृताः ! महाराजो दुर्योधनः समाज्ञापयति ।

सूत्रधारः—भवतु, विज्ञातम् ।

उत्पन्ने धार्तराष्ट्राणां विरोधे पाण्डवैः सह ।
मन्त्रशालां रचयति भृत्यो दुर्योधनाज्ञया ॥ २ ॥

( निष्क्रान्तः )

स्थापना ।



द्वितीय बिन्दुः

( ततः प्रविशति काञ्चुकीयः )

काञ्चुकीयः— भो भोः प्रतिहाराधिकृताः महाराजो दुर्योधनः समाज्ञापयति—अद्य सर्वपार्थिवैः सह मन्त्रयितुमिच्छामि । तदाहूयन्तां सर्वे राजान इति । ( परिक्रम्यावलोक्य ) अये अयं महाराजो दुर्योधन इत एवाभिवर्तते । य एषः,

श्यामो युवा सितदुकूलकृतोत्तरीयः
सच्छत्रचामरवरो रचिताङ्गरागः ।
श्रीमान् विभूषणमणिद्युतिरञ्जिताङ्गो
नक्षत्रमध्य इव पर्वगतः शशाङ्कः ॥ ३ ॥

( ततः प्रविशति[1] यथानिर्दिष्टो दुर्योधनः )

दुर्योधनः—

उद्धूतरोषमिव मे हृदयं सहर्षं
प्राप्तं रणोत्सवमिमं सहसा विचिन्त्य ।
इच्छामि पाण्डवबले वरवारणाना-
मुत्कृत्तदन्तमुसलानि मुखानि कर्तुम् ॥ ४ ॥

काञ्चुकीयः— जयतु महाराजः। महाराजशासनात् समानीतं सर्वराजमण्डलम् ।

दुर्योधनः— सम्यक् कृतम् । प्रविश त्वमवरोधनम् ।

काञ्चुकीयः— यदाज्ञापयति महाराजः । ( निष्क्रान्तः )

---

१. 'ति दु' क. पाठः,

दुर्योधनः— आर्यौ ! वैकर्णवर्षदेवौ ! उच्यताम्—अस्ति ममैकादशाक्षौहिणीबलसमुदयः । अस्य कः सेनापतिर्भवितुमर्हति ।

किं किमाहतुर्भवन्तौ—महान् खल्वयमर्थः । मन्त्रयित्वा वक्तव्यमिति ।

सदृशमेतत्[1] । तदागम्यतां मन्त्रशालामेव प्रविशामः । आचार्य ! अभिवादये । प्रविशतु भवान् मन्त्रशालाम् । पितामह ! अभिवादये प्रविशतु भवान् मन्त्रशालाम् । मातुल ! अभिवादये । प्रविशतु भवान् मन्त्रशालाम् । आर्यौ ! वैकर्णवर्षदेवौ ! प्रविशतां भवन्तौ । भो भोः सर्वक्षत्रियाः ! स्वैरं प्रविशन्तु भवन्तः । वयस्य ! कर्ण ! प्रविशामस्तावत् ।

( प्रविश्य )

आचार्य ! एतत्[2] कूर्मासनम्, आस्यताम् । पितामह ! एतत्[3] सिंहासनम्, आस्यताम् । मातुल ! एतच्चर्मासनम्[4], आस्यताम् । आर्यौ ! वैकर्णवर्षदेवौ ! आसातां भवन्तौ । भो भोः सर्वक्षत्रियाः ! स्वैरमासतां भवन्तः ।

किमिति किमिति महाराजो नास्त इति ! अहो सेवाधर्मः । नन्वयमहमासे । वयस्य ! कर्ण ! त्वमप्यास्स्व ( उपविश्य )

---

१. 'दृ आग' क. ग. पाठः, २. 'तदासन' क. ग. पाठः. ३. 'तदासन' क. ग. पाठः. ४. 'तदासन' क. ग. पाठः.

आर्यौ ! वैकर्णवर्षदेवौ ! उच्यताम्—अस्ति ममैकादशाक्षौहिणी-बलसमुदयः । अस्य कः सेनापतिर्भवितुमर्हतीति ।

किमाहतुर्भवन्तौ—अत्रभवान् गान्धारराजो वक्ष्यतीति ? भवतु मातुलेनाभिधीयताम् ।

किमाह मातुलः—अत्रभवति गाङ्गेये स्थिते कोऽन्यः सेनापतिर्भवितुमर्हतीति ।

सम्यगाह मातुलः । भवतु भवतु । पितामह एव भवतु । वयमप्येतदभिलषामः ।

सेनानिनादपटहस्वनशङ्खनादै-
श्चण्डानिलाहतमहोदधिनादकल्पैः ।
गाङ्गेयमूर्ध्नि पतितैरभिषेकतोयैः
सार्धं पतन्तु हृदयानि नराधिपानाम् ॥ ५ ॥

( प्रविश्य )

काञ्चुकीयः—जयतु महाराजः । एष खलु पाण्डवस्कन्धावाराद् दौत्येनागतः पुरुषोत्तमो नारायणः ।

दुर्योधनः—मा तावद् भो बादरायण ! । किं किं कंसभृत्यो दामोदरस्तव पुरुषोत्तमः ? स गोपालकस्तव पुरुषोत्तमः ? बार्हद्रथापहृतविषय कीर्त्तिभोगस्तव पुरुषोत्तमः ? अहो पार्थिवासन्नमाश्रितस्य भृत्यजनस्य समुदाचारः । सगर्वं खल्वस्य वचनम् । आ अपध्वंस ;

काञ्चुकीयः—प्रसीदतु महाराजः । संभ्रमेण समुदाचारो विस्मृतः । ( पादयोः पतति )

दुर्योधनः—संभ्रम इति । आ मनुष्याणामस्त्येव संभ्रमः । उत्तिष्ठोत्तिष्ठ ।

काञ्चुकीयः—अनुगृहीतोऽस्मि ।

दुर्योधनः—इदानीं प्रसन्नोऽस्मि । क एष दूतः प्राप्तः ।

काञ्चुकीयः—दूतः प्राप्तः केशवः ।

दुर्योधनः—केशव इति । एवमेष्टव्यम् । अयमेव समुदाचारः । भो भो राजानः ! दौत्येनागतस्य केशवस्य किं युक्तम् । किमाहुर्भवन्तः—अर्घ्यप्रदानेन पूजयितव्यः केशव इति । न मे रोचते । ग्रहणमस्यात्र हितं पश्यामि ।

> ग्रहणमुपगते तु वासुभद्रे
> हृतनयना इव पाण्डवा भवेयुः ।
> गतिमतिरहितेषु पाण्डवेषु
> क्षितिरखिलापि भवेन्ममासपत्ना ॥ ६ ॥

अपिच योऽत्र केशवस्य प्रत्युत्थास्यति, स मया द्वादशसुवर्णभारेण दण्ड्यः । तदप्रमत्ता भवन्तु भवन्तः । कोनुखलु ममाप्रत्युत्था [ प ? ] नस्योपायः । हन्त दृष्ट उपायः । बादरायण ! आनीयतां स चित्रपटो ननु, यत्र द्रौपदीकेशाम्बरावकर्षणमालिखितम् । ( अपवार्य ) तस्मिन् दृष्टिविन्यासं कुर्वन् नोत्थास्यामि केशवस्य ।

काञ्चुकीयः—यदाज्ञापयति महाराजः । ( निष्क्रम्य प्रविश्य ) जयतु महाराजः । अयं स चित्रपटः ।

दुर्योधनः—ममाग्रतः प्रसारय ।

काञ्चुकीयः—यदाज्ञापयति महाराजः । ( प्रसारयति )

दुर्योधनः—अहो दर्शनीयोऽयं चित्रपटः । एष दुःशासनो द्रौपदीं केशहस्ते गृहीतवान् । एषा खलु द्रौपदी,

दुःशासनपरामृष्टा सम्भ्रमोत्फुल्ललोचना ।
राहुवक्त्रान्तरगता चन्द्रलेखेव शोभते ॥ ७ ॥

एष दुरात्मा भीमः सर्वराजसमक्षमवमानितां द्रौपदीं दृष्ट्वा प्रवृद्धामर्षः सभास्तम्भं तुलयति । एष युधिष्ठिरः,

सत्यधर्मघृणायुक्तो द्यूतविभ्रष्टचेतनः ।
करोत्यपाङ्गविक्षेपैः शान्तामर्षं वृकोदरम् ॥ ८ ॥

एष इदानीमर्जुनः,

रोषाकुलाक्षः स्फुरिताधरोष्ठ-
स्तृणाय मत्वा रिपुमण्डलं तत् ।
उत्सादयिष्यन्निव सर्वराज्ञः*
शनैः समाकर्षति गाण्डिवज्याम् ॥ ९ ॥

---

* समासान्तविधेरनित्यत्वमाश्रयणीयम् । 'सर्व राजान्' इति वा पाठो भवेत

एष युधिष्ठिरोऽर्जुनं निवारयति । एतौ नकुलसहदेवौ,

कृतपरिकरबन्धौ चर्मनिस्त्रिंशहस्तौ
परुषितमुखरागौ स्पष्टदष्टाधरोष्ठौ ।
विगतमरणशङ्कौ सत्वरं भ्रातरं मे
हरिमिव मृगपोतौ तेजसाभिप्रयातौ ॥ १० ॥

एष युधिष्ठिरः कुमारावुपेत्य निवारयति—

नीचोऽहमेव विपरीतमतिः कथं वा
रोषं परित्यजतमद्य नयानयज्ञौ ।
द्यूताधिकारमवमानममृष्यमाणाः
सत्त्वाधिकेषु वचनीयपराक्रमाः स्युः ॥ ११ ॥

इति । एष गान्धारराजः,

अक्षान् क्षिपन् +सकितवं प्रहसन् सगर्वं
सङ्कोचयन्निव मुदं द्विषतां स्वकीर्त्या ।
स्वैरासनो द्रुपदराजसुतां रुदन्तीं*
काक्षेण पश्यति लिखत्य ( भिखां ? ) नयज्ञः ॥ १२ ॥

एतावाचार्यपितामहौ तां दृष्ट्वा लज्जायमानौ पटान्तान्तर्हितमुखौ स्थितौ । अहो अस्य वर्णाढ्यता । अहो भावोपपन्नता । अहो युक्तलेखता । सुव्यक्तमालिखितोऽयं चित्रपटः । प्रीतोऽस्मि । कोऽत्र ।

---

+सकैतवमित्यर्थः 'स कितवः' इति वा पाठो भवेत् । * रुदधातोस्तुदादित्वमप्यत एव प्रयोगात् कल्प्यम् ।

काञ्चुकीयः—जयतु महाराजः ।

दुर्योधनः—बादरायण ! आनीयतां स विहगवाहनमात्र-

विस्मितो दूतः ।

काञ्चुकीयः—यदाज्ञापयति महाराजः । ( निष्क्रान्तः )

दुर्योधनः—वयस्य ! कर्ण !

प्राप्तः किलाद्य वचनादिह पाण्डवानां
दौत्येन भृत्य इव कृष्णमतिः स कृष्णः ।
श्रोतुं सखे ! त्वमपि सज्जय कर्ण ! कर्णौ
*नारीमृदूनि वचनानि युधिष्ठिरस्य ॥ १३ ॥

( ततः प्रविशति वासुदेवः काञ्चुकीयश्च )

वासुदेवः—अद्य खलु धर्मराजवचनाद् धनञ्जयाकृत्रिममित्रतया चाहवदर्पमनुक्तग्राहिणं सुयोधनं प्रति मयाप्यनुचितदौत्यसमयोऽनुष्ठितः । अथच,

कृष्णापराभवभुवा रिपुवाहिनीभ-
कुम्भस्थलीदलनतीक्ष्णगदाधरस्य ।
भीमस्य कोपशिखिना युधि पार्थपत्रि-
चण्डानिलैश्च कुरुवंशवनं विनष्टम् ॥ १४ ॥
इदं सुयोधनशिबिरम् । इह हि,

*नारीमृदूनि स्त्रीवचन विक्लवानि । वृत्तौ नारीशब्दो नारीसमवेतवचनक्रियावर्ती ।

आवासाः पार्थिवानां सुरपुरसदृशाः स्वच्छन्दविहिता
विस्तीर्णाः शस्त्रशाला बहुविधकर (रै ? णै): शस्त्रैरुपचिताः
हेषन्ते मन्दुरास्थास्तुरगवरघटा बृंहन्ति करिण
ऐश्वर्यं स्फीतमेतत् स्वजनपरिभवादासन्नविलयम् ॥ १५ ॥

भोः !

दुष्टवादी गुणद्वेषी शठः स्वजननिर्दयः ।
सुयोधनो हि मां दृष्ट्वा नैव कार्यं करिष्यति ॥ १६ ॥

भो बादरायण ! किं प्रवेष्टव्यम् ।

काञ्चुकीयः—अथकिमथकिम् । प्रवेष्टुमर्हति पद्मनाभः ।

वासुदेवः—(प्रविश्य) कथं कथं मां दृष्ट्वा संभ्रान्ताः सर्वक्षत्रियाः । अलमलं संभ्रमेण स्वैरमासतां भवन्तः

दुर्योधनः—कथं कथं केशवं दृष्ट्वा संभ्रान्ताः सर्वक्षत्रियाः । अलमलं संभ्रमेण । स्मरणीयः पूर्वमाश्रावितो दण्डः । नन्वयमहमाज्ञता ।

वासुदेवः—भोः सुयोधन ! किमास्से ।

दुर्योधनः—(आसनात् पतित्वा आत्मगतम्) सुव्यक्तं प्राप्त एव केशवः ।

उत्साहेन मतिं कृत्वाप्यासीनोऽस्मि समाहितः ।
केशवस्य प्रभावेन चलितो स्म्यासनादहम् ॥ १७ ॥

अहो बहुमायोऽयं दूतः । ( प्रकाशम् ) भो दूत ! एतदासनमास्यताम् ।

वासुदेवः—आचार्य ! आस्यताम् । गाङ्गेयप्रमुखा राजानः ! स्वैरमासतां भवन्तः । वयमप्युपविशामः । ( उपविश्य ) अहो दर्शनीयोऽयं चित्रपटः । मा तावत् । द्रौपदीकेशाग्रर्षणमत्रालिखितम् । अहोनुखलु,

सुयोधनोऽयं स्वजनावमानं
पराक्रमं पश्यति बालिशत्वात् ।
को नाम लोके स्वयमात्मदोष-
मुद्घाटयेन्नष्टघृणः सभासु ॥ १८ ॥

आः अपनीयतामेष चित्रपटः ।

दुर्योधनः—बादरायण ! अपनीयतां किल चित्रपटः ।

काञ्चुकीयः—यदाज्ञापयति महाराजः । ( अपनयति )

दुर्योधनः—भो दूत !

धर्मात्मजो वायुसुतश्च भीमो
भ्राताऽर्जुनो मे त्रिदशेन्द्रसूनुः ।
यमौ च तावश्विसुतौ विनीतौ
सर्वे सभृत्याः कुशलोपपन्नाः ॥ १९ ॥

वासुदेवः—सदृशमेतद् गान्धारीपुत्रस्य । अथकिमथकिम् ।

कुशलिनः सर्वे । भवतो राज्ये शरीरे बाह्याभ्यन्तरे च कुशलमनामयं च पृष्ट्वा विज्ञापयन्ति युधिष्ठिरादयः पाण्डवाः—

अनुभूतं महद् दुःखं संपूर्णः समयः स च ।
अस्माकमपि धर्म्यं यद् दायाद्यं तद् विभज्यताम् ॥ २० ॥

इति ।

दुर्योधनः—कथं कथं दायाद्यमिति ।

वने पितृव्यो मृगयाप्रसङ्गतः
कृतापराधो मुनिशापमाप्तवान् ।
तदाप्रभृत्येव स दारनिस्स्पृहः
परात्मजानां पितृतां कथं व्रजेत् ॥ २१ ॥

वासुदेवः—पुराविदं भवन्तं पृच्छामि ।

विचित्रवीर्यो विषयी विपत्तिं
क्षयेण यातः पुनरम्बिकायाम् ।
व्यासेन जातो धृतराष्ट्र एष
लभेत राज्यं जनकः कथं ते ॥ २२ ॥

मा मा भवान्,

एवं परस्परविरोधविवर्धनेन
शीघ्रं भवेत् कुरुकुलं नृप ! नामशेषम् ।
तत् कर्तुमर्हति भवानपकृष्य रोषं
यत् त्वां [illegible]

दुर्योधनः—भो दूत ! न जानाति भवान् राज्यव्यवहारम् ।

राज्यं नाम नृपात्मजैः सहृदयैर्जित्वा रिपून् भुज्यते
तल्लोके न तु याच्यते न तु पुनर्दीनाय वा दीयते ।
काङ्क्षा चेन्नृपतित्वमाप्तुमचिरात् कुर्वन्तु ते साहसं
स्वैरं वा प्रविशन्तु शान्तमतिभिर्जुष्टं शमायाश्रमम् ॥ २४ ॥

वासुदेवः—भो सुयोधन ! अलं बन्धुजने परुषमभिधातुम् ।

पुण्यसञ्चयसम्प्राप्तामधिगम्य नृपश्रियम् ।
वञ्चयेद् यः सुहृद्बन्धून् स भवेद् विफलश्रमः ॥ २५ ॥

दुर्योधनः—

स्यालं तव गुरोर्भूपं कंसं प्रति न ते दया ।
कथमस्माकमेवं स्यात् तेषु नित्यापकारिषु ॥ २६ ॥

वासुदेवः—अलं तन्मद्दोषतो ज्ञातुम् ।

कृत्वा पुत्रवियोगार्तां बहुशो जननीं मम ।
वृद्धं स्वपितरं बद्ध्वा हतोऽयं मृत्युना स्वयम् ॥ २७ ॥

दुर्योधनः—सर्वथा वञ्चितस्त्वया कंसः । अलमात्मस्तवेन ।

न शौर्यमेतत् । पश्य,

*जामातृनाशव्यसनाभितप्ते
रोषाभिभूते मगधेश्वरेऽथ ।

पलायमानस्य भयातुरस्य
शौर्यं तदेतत् क्व गतं तवासीत् ॥ २८ ॥

वासुदेवः—भोः सुयोधन! देशकालावस्थापेक्षितं खलु शौर्यं नयानुगामिनाम्। इह तिष्ठतु तावदस्थानगतः परिहासः। स्वकार्यमनुष्ठीयताम्।

कर्तव्यो भ्रातृषु स्नेहो विस्मर्तव्या गुणेतराः।
सम्बन्धो बन्धुभिः श्रेयान् लोकयोरुभयोरपि ॥ २९ ॥

दुर्योधनः—

देवात्मजैर्मनुष्याणां कथं वा बन्धुता भवेत्।
पिष्टपेषणमेतावत् पर्याप्तं छिद्यतां कथा ॥ ३० ॥

वासुदेवः—(आत्मगतम्)

प्रसाद्यमानः साम्नायं न स्वभावं विमुञ्चति।
हन्त संक्षोभयाम्येनं वचोभिः परुषाक्षरैः ॥ ३१ ॥

(प्रकाशम्) भोः सुयोधन! किं न जानीषेऽर्जुनस्य बलपराक्रमम्।

दुर्योधनः— न जाने।

वासुदेवः—भोः! श्रूयतां,

कैरातं वपुरास्थितः पशुपतिर्युद्धेन सन्तोषितो
वह्नेः खाण्डवमश्नतः सुमहती वृष्टिः शरैश्छादिता।

देवेन्द्रार्तिकरा निवातकवचा नीताः क्षयं लीलया
नन्वेकेन तदा विराटनगरे भीष्मादयो निर्जिताः ॥ ३२ ॥

अपिच, तवापि प्रत्यक्षंपरं कथयामि ।

ननु त्वं चित्रसेनेन नीयमानो नभस्तलम् ।
विक्रोशन् घोषयात्रायां फाल्गुनेनैव मोक्षितः ॥ ३३ ॥

किं बहुना,

दातुमर्हसि मद्वाक्याद् राज्यार्धं धृतराष्ट्रज ! ।
अन्यथा सागरान्तां गां हरिष्यन्ति हि पाण्डवाः ॥ ३४ ॥

दुर्योधनः—कथं कथम् । हरिष्यन्ति हि पाण्डवाः ।

प्रहरति यदि युद्धे मारुतो भीमरूपी
प्रहरति यदि साक्षात् पार्थरूपेण शक्रः ।
परुषवचनदक्ष ! त्वद्वचोभिर्न दास्ये
तृणमपि पितृभुक्ते वीर्यगुप्ते स्वराज्ये ॥ ३५ ॥

वासुदेवः—भोः कुरुकुलकलङ्कभूत ! अयशोलुब्ध ! वयं किल तृणान्तराभिभाषकाः ।

दुर्योधनः—भो गोपालक ! तृणान्तराभिभाष्यो भवान् ।

अवध्यां प्रमदां हत्वा हयं गोवृषमेव च ।
महानपि सुनिर्लज्जो वक्तुमिच्छसि साधुभिः ॥ ३६ ॥

वासुदेवः—भोः सुयोधन ! ननु क्षिपसि माम् ।

दुर्योधनः—आः अभाष्यस्त्वम् ।

अहमवधृतपाण्डरातपत्रो
द्विजवरहस्तधृताम्बुसिक्तमूर्धा ।
अवनतनृपमण्डलानुयातैः
सह कथयामि भवद्विधैर्न भाषे ॥ ३७ ॥

वासुदेवः—न व्याहरति किल मां सुयोधनः । भोः !
शठ ! बान्धवनिःस्नेह ! *काक ! केकर ! पिङ्गल ! ।
त्वदर्थात् कुरुवंशोऽयमचिरान्नाशमेष्यति ॥ ३८ ॥

भो भो राजानः ! गच्छामस्तावत् ।

दुर्योधनः—कथं यास्यति किल केशवः । दुःशासन ! दुर्मर्षण दुर्मुख ! दुर्बुद्धे ! दुष्टेश्वर ! दूतसमुदाचारमतिक्रान्तः केशवो बध्यताम् । कथमशक्ताः । दुःशासन ! न समर्थः खल्वसि ।

करितुरगनिहन्ता कंसहन्ता स कृष्णः
पशुपकुलनिवासादानुजीव्यानभिज्ञः ।
हृतभुजबलवीर्यः पार्थिवानां समक्षं
स्ववचनकृतदोषो बध्यतामेष शीघ्रम् ॥ ३९ ॥

अयमशक्तः । मातुल ! बध्यतामयं केशवः । कथं पराङ्मुखः पतति ।

---

* काक ! इति दुश्चापलात्, केकर ! इति विकृताक्षत्वात्, पिङ्गल ! इति मार्जा-

भवतु, अहमेव पाशैर्बध्नामि । ( उपसर्पति )

वासुदेवः—कथं ( वि ? बन्धु ) कामो मां किल सुयोधनः । भवतु, सुयोधनस्य सामर्थ्यं पश्यामि । ( विश्वरूपमास्थितः )

दुर्योधनः—भो दूत !

सृजसि यदि समन्ताद् देवमायाः स्वमाया
प्रहरसि यदि वा त्वं दुर्निवारैः सुरास्त्रैः ।
हयगजवृषभाणां पातनाज्जातदर्पो
नरपतिगणमध्ये बध्यसे त्वं मयाद्य ॥ ४० ॥

आः तिष्ठेदानीम् कथं न दृष्टः केशवः । अयं केशवः । अहो ह्रस्वत्वं केशवस्य । आः तिष्ठेदानीम् । कथं न दृष्टः केशवः । अयं केशवः । अहो दीर्घत्वं केशवस्य । कथं न दृष्टः केशवः । अयं केशवः । सर्वत्र मन्त्रशालायां केशवा भवन्ति । किमिदानीं करिष्ये । भवतु, दृष्टम् । भो भो राजानः ! एकैकः केशवो बध्यताम् । कथं स्वयमेव पाशैर्बद्धाः पतन्ति राजानः । साधु भो *जम्भक ! साधु ।

मत्कार्मुकोदरविनिःसृतबाणजालै-
र्विद्धक्षरत्क्षतजरञ्जितसर्वगात्रम् ।

---

*जम्भको [illegible] ।

पश्यन्तु पाण्डुतनयाः शिबिरोपनीतं
त्वां बाष्परुद्धनयनाः परिनिःश्वसन्तः ॥ ४१ ॥

( निष्क्रान्तः )

**वासुदेवः**—भवतु, पाण्डवानां कार्यमहमेव साधयामि । भोः सुदर्शन इतस्तावत् ।

( ततः प्रविशति सुदर्शनः )

**सुदर्शनः**—एष भोः !

श्रुत्वा गिरं भगवतो विपुलप्रसादा-
न्निर्धावितोऽस्मि परिचारिततोयदौघः ।
कस्मिन् खलु प्रकुपितः कमलायताक्षः
कस्याद्य मूर्धनि मया प्रविजृम्भितव्यम् ॥ ४२ ॥

क नु खलु भगवान् नारायणः ।

अव्यक्तादिरचिन्त्यात्मा लोकसंरक्षणोद्यतः ।
एकोऽनेकवपुः श्रीमान् द्विषद्बलनिषूदनः ॥ ४३ ॥

( विलोक्य ) अये अयं भगवान्, हस्तिनपुरद्वारे दूतसमुदाचारेणोपस्थितः । कुतः खल्वापः कुतः खल्वापः। भगवति ! आकाशगङ्गे ! आपस्तावत्।हन्त स्रवति । ( आचम्योपसृत्य ) जयतु भगवान् नारायणः । ( प्रणमति )

**वासुदेवः**—सुदर्शन ! अप्रतिहतपराक्रमो भव ।

**सुदर्शनः**—अनुगृहीतोऽस्मि ।

वासुदेवः—दिष्ट्या भवान् कर्मकाले प्राप्तः ।

सुदर्शनः—कथं कथं कर्मकाल इति । आज्ञापयतु भगवानाज्ञापयतु ।

किं मेरुमन्दरकुलं परिवर्तयामि
संक्षोभयामि सकलं मकरालयं वा ।
नक्षत्रवंशमखिलं भुवि पातयामि
नाशक्यमस्ति मम देव ! तव प्रसादात् ॥ ४४ ॥

वासुदेवः—भोः सुदर्शन ! इतस्तावत् । भोः सुयोधन !

यदि लवणजलं वा कन्दरं वा गिरीणां
ग्रहगणचरितं वा वायुमार्गं प्रयासि ।
मम भुजबलयोगप्राप्तसंजातवेगं
भवतु चपल ! चक्रं कालचक्रं तवाद्य ॥ ४५ ॥

सुदर्शनः—भोः सुयोधनहतक ! ( इति पुनर्विचार्य ) प्रसीदतु प्रसीदतु भगवान् नारायणः ।

महीभारापनयनं कर्तुं जातस्य भूतले ।
अस्मिन्नेवं गते देव ! ननु स्याद् विफलः श्रमः ॥ ४३ ॥

वासुदेवः—सुदर्शन ! रोषात् समुदाचारो नावेक्षितः । गम्यतां स्वनिलयमेव ।

सुदर्शनः—यदाज्ञापयति भगवान् नारायणः । कथं कथं गोपालक इति । त्रिचरणातिक्रान्तत्रिलोको नारायणः खल्वत्रभवान् ।

शरणं व्रजन्तु भवन्तः । यावद् गच्छामि । अये एतद् भगवदायुधवरं शार्ङ्गं प्राप्तम् ।

तनुमृदुललिताङ्गं स्त्रीस्वभावोपपन्नं
हरिकरधृतमध्यं शत्रुसङ्घककालः ।
कनकखचितपृष्ठं भाति कृष्णस्य पार्श्वे
नवसलिलदपार्श्वे चारुविद्युल्लतेव ॥ ४७ ॥

भो भोः ! प्रशान्तरोषो भगवान् नारायणः । गम्यतां स्वनिलयमेव। हन्त निवृत्तः । यावद् गच्छामि । अये इयं कौमोदकी प्राप्ता ।

मणिकनकविचित्रा चित्रमालोत्तरीया
सुररिपुगणगात्रध्वंसने जाततृष्णा ।
गिरिवरतटरूपा दुर्निवारातिवीर्या
व्रजति नभसि शीघ्रं मेघवृन्दानुयात्रा ॥ ४८ ॥

हे कौमोदकि ! प्रशान्तरोषो भगवान् नारायणः । हन्त निवृत्ता । यावद् गच्छामि । अये अयं पाञ्चजन्यः प्राप्तः ।

पूर्णेन्दुकुन्दकुमुदोदरहारगौरो
नारायणाननसरोजकृतप्रसादः ।
यस्य स्वनं प्रलयसागरघोषतुल्यं
गर्भा निशम्य निपतन्त्यसुराङ्गनानाम् ॥ ४९ ॥

हे पाञ्चजन्य ! प्रशान्तरोषो भगवान् । गम्यताम् । हन्त निवृत्तः । अये नन्दकासिः प्राप्तः ।

वनिताविग्रहो युद्धे महाऽसुरभयंकरः।
प्रयाति गगने शीघ्रं महोल्केव विभात्ययम् ॥ ५० ॥

हे नन्दक ! प्रशान्तरोषो भगवान्। गम्यताम्। हन्त निवृत्तः। यावद् गच्छामि। अये एतानि भगवदायुधवराणि।

सोऽयं खड्गः खरांशोरपहसिततनुः स्वैः करैर्नन्दकाख्यः
सेयं कौमोदकी या सुररिपुकठिनोरःस्थलक्षोददक्षा।
सैषा शार्ङ्गाभिधाना प्रलयघनरवज्यारवा चाप ( रेखा
सोऽयं गम्भी ) रघोषः शशिकरविशदः शङ्खराट् पाञ्चजन्यः ॥ ५१ ॥

हे शार्ङ्ग ! कौमोदकि ! पाञ्चजन्य !
दैत्यान्तकृन्नन्दक ! शत्रु-वहे !।
प्रशान्तरोषो भगवान् मुरारिः
स्वस्थानमेवात्र हि ( गच्छ ता ) वत् ॥५२ ॥

हन्त निवृत्ताः। यावद् गच्छामि। अये अत्युद्धूतो वायुः। अतितपत्यादित्यः। चलिताः पर्वताः। क्षुब्धाः सागराः। पतिता वृक्षाः। भ्रान्ता मेघाः। प्रलीना वासुकिप्रभृतयो भुजङ्गेश्वराः। किन्नु खल्विदम्। अये अयं भगवतो वाहनो गरुडः प्राप्तः।

सुरासुराणां परिखेदलब्धं
येनामृतं मातृविमोक्षणार्थम्।
आच्छिन्नमासीद् द्विपतो मुरारे-
स्त्वामद्वहामीति वरोऽपि दत्तः ॥ ५३ ॥

हे काश्यपप्रियसुत ! गरुड ! प्रशान्तरोषो भगवान् देवदेवेशः । गम्यतां स्वनिलयमेव । हन्त निवृत्तः । यावद् गच्छामि ।

एते + + + + + + + + +
+ + + संभ्रमचलन्मुकुटोत्तमाङ्गाः ।
रुष्टेऽच्युते विगतकान्तिगुणाः प्रशान्तं
श्रुत्वा श्रयन्ति सदनानि ( नि ) वृत्ततापाः ॥ ५४ ॥

यावदहमपि कान्तां मेरुगुहामेव यास्यामि । ( निष्क्रान्तः )

वासुदेवः—यावदहमपि पाण्डवशिबिरमेव यास्यामि ।

( नेपथ्ये )

नखलु नखलु गन्तव्यम् ।

वासुदेवः—अये वृद्धराजस्वर इव । भो राजन् ! एष स्थितोऽस्मि ।

( ततः प्रविशति धृतराष्ट्रः )

धृतराष्ट्रः—क्वनुखलु भगवान् नारायणः । क्वनुखलु भगवान् पाण्डवश्रेयस्करः । क्वनुखलु भगवान् विप्रप्रियः । क्वनुखलु भगवान् देवकीनन्दनः ।

मम पुत्रापराधात् तु शार्ङ्गपाणे ! तवाधुना ।
एतन्मे त्रिदशाध्यक्ष ! पादयोः पतितं शिरः ॥ ५५ ॥

( पतति )

धृतराष्ट्रः—अनुगृहीतोऽस्मि । भगवन् ! इदमर्घ्यं पाद्यं च प्रतिगृह्यताम् ।

वासुदेवः—सर्वं गृह्णामि । किं ते भूयः प्रियमुपहरामि ।

धृतराष्ट्रः—यदि मे भगवान् प्रसन्नः, किमतःपरमिच्छामि ।

वासुदेवः—गच्छतु भवान् पुनर्दर्शनाय ।

धृतराष्ट्रः—यदाज्ञापयति भगवान् नारायणः ( निष्क्रान्तः )

( भरतवाक्यम् )

इमां सागरपर्यन्तां हिमवद्विन्ध्यकुण्डलाम् ।
महीमेकातपत्राङ्कां राजसिंहः प्रशास्तु नः ॥ ५६ ॥

( निष्क्रान्ताः सर्वे )

दूतवाक्यं समाप्तम् ।

---

शुभं भूयात् ।

# ॐ अर्जुन विलापः ॐ



## सूत उवाच

एवं कृष्णसखः कृष्णो भ्रात्रा राज्ञा विकल्पितः ।
नानाशङ्कास्पदं रूपं कृष्णविश्लेषकर्शितः ॥ १ ॥

शोकेन शुष्यद्वदनहृत्सरोजो हतप्रभः ।
विभुं तमेवानुध्यायन्नाशक्नोत्प्रतिभाषितुम् ॥ २ ॥

कृच्छ्रेण संस्तभ्य शुचः पाणिनामृज्य नेत्रयोः ।
परोक्षेण समुन्नद्धप्रणयौत्कण्ठ्यकातरः ॥ ३ ॥

सख्यं मैत्रीं सौहृदं च सारथ्यादिषु संस्मरन् ।
नृपमग्रजमित्याह बाष्पगद्गदया गिरा ॥ ४ ॥

## अर्जुन उवाच

वञ्चितोऽहं महाराज हरिणा बन्धुरूपिणा ।
येन मेऽपहृतं तेजो देवविस्मापनं महत् ॥ ५ ॥

यस्य क्षणवियोगेन लोको ह्यप्रियदर्शनः ।
उक्थेन रहितो ह्येष मृतकः प्रोच्यते यथा ॥ ६ ॥

यत्संश्रयाद्द्रुपदगेहमुपागतानां,
राज्ञां स्वयंवरमुखे स्मरदुर्मदानाम् ।
तेजो हृतं खलु मयाभिहतश्च मत्स्यः,
सज्जीकृतेन धनुषाधिगता च कृष्णा ॥ ७ ॥

यत्संनिधावहमु खाण्डवमग्नयेऽदा-
मिन्द्रं च सामरगणं तरसा विजित्य ।
लब्धा सभा मयकृताद्भुतशिल्पमाया,

यत्तेजसा नृपशिरोऽङ्घ्रिमहन्मखार्थं,
आर्योऽनुजस्तव गजायुतसत्त्ववीर्यः ।
तेनाहृताः प्रमथनाथमखाय भूपा,
यन्मोचितास्तदनयन्बलिमध्वरे ते ॥ ९ ॥

पत्न्यास्तवाधिमखक्लृप्तमहाभिषेक-
श्लाघिष्ठचारुकबरं कितवैः सभायाम् ।
स्पृष्टं विकीर्य पदयोः पतिताश्रुमुख्या,
यैस्तत्स्त्रियोऽकृत हतेशविमुक्तकेशाः ॥ १० ॥

यो नो जुगोप वनमेत्य दुरन्तकृच्छ्राद्-
दुर्वाससोऽरिविहितादयुताग्रभुग्यः ।
शाकान्नशिष्टमुपभुज्य यतस्त्रिलोकीं,
तृप्तामंस्त सलिले विनिमग्नसङ्घः ॥ ११ ॥

यत्तेजसाथ भगवान्युधि शूलपाणि-
र्विस्मापितः स गिरिजोऽस्त्रमदान्निजं मे ।
अन्येऽपि चाहममुनैव कलेवरेण,
प्राप्तो महेन्द्रभवने महदासनार्धम् ॥ १२ ॥

तत्रैव मे विहरतो भुजदण्डयुग्मं,
गाण्डीवलक्षणमरातिवधाय देवाः ।
सेन्द्राः श्रिता यदनुभावितमाजमीढ,
तेनाहमद्य मुषितः पुरुषेण भूम्ना ॥ १३ ॥

यद्बान्धवः कुरुबलाब्धिमनन्तपार-
मेको रथेन ततरेऽहमतीर्यसत्त्वम् ।
प्रत्याहृतं बहु धनं च मया परेषां,
तेजास्पदं मणिमयं च हृतं शिरोभ्यः ॥ १४ ॥

यो भीष्मकर्णगुरुशल्यचमूष्वदभ्र-
राजन्यवर्यरथमण्डलमण्डितासु ।

अग्रेचरो मम विभो रथयूथपानाः
मायुर्मनांसि च दृशा सह ओज आर्च्छत् ॥ १५ ॥
यद्दोष्षु मा प्रणिहितं गुरुभीष्मकर्ण-
द्रौणित्रिगर्तशलसैन्धववाह्लिकाद्यैः ।
अस्त्राण्यमोघमहिमानि निरूपितानि,
नो पस्पृशुर्नृहरिदासमिवासुराणि ॥ १६ ॥

सौत्ये वृतः कुमतिनात्मद ईश्वरो मे,
यत्पादपद्ममभवाय भजन्ति भव्याः ।
मां श्रान्तवाहमरयो रथिनो भुविष्ठं,
न प्राहरन्यदनुभावनिरस्तचित्ताः ॥ १७ ॥
नर्माण्युदाररुचिरस्मितशोभितानि,
हे पार्थ हेऽर्जुन सखे कुरुनन्दनेति ।
संजल्पितानि नरदेव हृदिस्पृशानि,
स्मर्तुर्लुठन्ति हृदयं मम माधवस्य ॥ १८ ॥

शय्यासनाटनविकत्थनभोजनादि,
ष्वैक्याद्वयस्य ऋतवानिति विप्रलब्धः ।
सख्युः सखेव पितृवत्तनयस्य सर्वं,
सेहे महान्महितया कुमतेरघं मे ॥ १९ ॥
सोऽहं नृपेन्द्र रहितः पुरुषोत्तमेन,
सख्या प्रियेण सुहृदा हृदयेन शून्यः ।
अध्वन्युरुक्रमपरिग्रहमङ्ग रक्ष-
न्गोपैरसद्भिरबलेव विनिर्जितोऽस्मि ॥ २० ॥
तद्वै धनुस्त इषवः स रथो हयास्ते,
सोऽहं रथी नृपतयो यत आनमन्ति ।
सर्वं क्षणेन तदभूदसदीशरिक्तं,
भस्मन्हुतं कुहकराद्धमिवोप्तमूष्याम् ॥ २१ ॥

## * वसन्तसेना-गृह-वर्णनम् *



विदूषकः—

आश्चर्यं भोः, तपश्चरणक्लेशविनिर्जितेन राक्षसराजो रावणः पुष्पकेण विमानेन गच्छति । अहं पुनर्ब्राह्मणोऽकृततपश्चरणक्लेशोऽपि नरनारीजनेन गच्छामि ।

चेटी—

प्रेक्षतामार्योऽस्मदीयं गेहद्वारम् ।

विदूषकः—

अहो सलिलसिक्तमार्जितकृतहरितोपलेपनस्य विविधसुगन्धि-कुसुमोपहारचित्रलिखितभूमिभागस्य गगनतलावलोकनकौतूहल-दूरोन्नामितशीर्षस्य दोलायमानावलम्बितैरावणहस्तभ्रमागतमल्लि-कादामगुणालंकृतस्य समुच्छ्रितदन्तिदन्ततोरणावभासितस्य महार-त्नोपरागोपशोभिना पवनबलान्दोलनाललच्चञ्चलाग्रहस्तेन 'इत एहि' इति व्याहरतेव मां सौभाग्यपताकानिवहेनोपशोभितस्य तोरणध-रणस्तम्भवेदिकानिक्षिप्तसमुल्लसद्धरितचूतपल्लवललामस्फटिकमङ्गलक-लशाभिरामोभयपार्श्वस्य महासुरवक्षःस्थलदुर्भेद्यवज्रनिरन्तरप्रतिबद्ध कनककपाटस्य, दुर्गतजनमनोरथायासकरस्य वसन्तसेनाभवनद्वारस्य सश्रीकता । यत्सत्यं मध्यस्थस्यापि जनस्य बलाद्दृष्टिमाकारयति ।

चेटी—

एत्वेतु । इमं प्रथम प्रकोष्ठं प्रविशत्वार्यः ।

विदूषकः—( प्रविश्यावलोक्य च । )

आश्चर्यं भोः, अत्रापि प्रथमे प्रकोष्ठे शशिशङ्खमृणालस-च्छाया विनिहितचूर्णमुष्टिपाण्डुरा विविधरत्नप्रतिबद्धकाञ्चनसो-

पानशोभिताः प्रासादपङ्क्तयोऽवलम्बितमुक्तादामभिः स्फटिकवाता यनमुखचन्द्रैर्निध्यायन्तीवोज्जयिनीम् । श्रोत्रिय इव सुखोपविष्टो निद्राति दौवारिकः । सदध्ना कलमोदनेन प्रलोभिता न भक्षयन्ति वायसा बलिं सुधासवर्णतया । आदिशतु भवती ।

चेटी—

एत्वेत्वार्यः । इमं द्वितीयं प्रकोष्ठं प्रविशत्वार्यः ।

विदूषकः—( प्रविश्यावलोक्य च )

आश्चर्यं भोः' इहापि द्वितीये प्रकोष्ठे पर्यन्तोपनीतयवसकुसकवलसुपुष्टास्तैलाभ्यक्तविषाणा बद्धाः प्रवहणबलीवर्दाः । अयमन्यतरोऽवमानित इव कुलीनो दीर्घं निःश्वसिति सैरिभः । इतश्चापनीतयुद्धस्य मल्लस्येव मर्द्यते ग्रीवा मेषस्य । इत इतोऽपरेषा मश्वानां केशकल्पना क्रियते । अयमपरः पाटच्चर इव दृढबद्धो मन्दुरायां शाखामृगः । इतश्च कूरच्युततैलमिश्रं पिण्डं हस्ती प्रतिग्राह्यते मात्रपुरुषैः । आदिशतु भवती ।

चेटी—

एत्वेत्वार्यः । इमं तृतीयं प्रकोष्ठं प्रविशत्वार्यः ।

विदूषकः—( प्रविश्य दृष्ट्वा च )

आश्चर्यं भोः, इहापि तृतीये प्रकोष्ठे इमानि तावत्कुलपुत्रजनोपवेशननिमित्तं विरचितान्यासनानि । अर्धवाचितं पाशकपीठे तिष्ठति पुस्तकम् । एतच्च स्वाधीनमणिमयसारिकासहितं पाशकपीठम् । इमे चापरे संधिविग्रहचतुरा विविधवर्णिकाविलिप्तचित्रफलकाग्रहस्ता इतस्ततः परिभ्रमन्ति गणिका वृद्धविटाश्च । आदिशतु भवती ।

चेटी—

एत्वेत्वार्यः। इमं चतुर्थं प्रकोष्ठं प्रविशत्वार्यः।

विदूषकः—( प्रविश्यावलोक्य च )

आश्चर्यं भोः, इहापि चतुर्थे प्रकोष्ठे युवतिकरताडिता जलधरा इव गम्भीरं नदन्ति मृदङ्गाः, क्षीणपुण्या इव गगनात्तारका निपतन्ति काँस्यतालाः, मधुकरविरुतमिव मधुरं वाद्यते वंशः। इमा अपराः कुसुमरसमत्ता इव मधुकर्योऽतिमधुरं प्रगीता गणिकादारिका नर्त्यन्ते, नाट्यं पाठ्यन्ते। अपवलिगता गवाक्षेषु वातं गृह्णन्ति सलिलगर्गर्यः। आदिशतु भवती।

चेटी—

एत्वेत्वार्यः। इमं पञ्चमं प्रकोष्ठं प्रविशत्वार्यः।

विदूषकः—( प्रविश्य दृष्ट्वा च )

आश्चर्यं भोः, इहापि पञ्चमे प्रकोष्ठेऽयं दरिद्रजनलोभोत्पादनकर आहरत्युपचितो हिङ्गुतैलगन्धः। विविधसुरभिधूमोद्गारैर्नित्यं संताप्यमानं निःश्वसितीव महानसं द्वारमुखैः। अधिकमुत्सुकायते मां साध्यमानबहुविधभक्ष्यभोजनगन्धः। अयमपरः पटच्चरमिव हतपशूदरपेशि धावति रूपिदारकः। बहुविधाहारविकारमुपसाधयति सूपकारः। बध्यन्ते मोदकाः, पच्यन्तेऽपूपकाः अपीदानीमिह भुङ्क्ष्व इति पादोदकं लप्स्ये। इह गन्धर्वाप्सरोगणैरिव विविधालंकारशोभितैर्गणिकाजनैर्बन्धुलैश्च यत्सत्यं स्वर्गायत इदं गेहम्। भोः, के यूयं बन्धुला नाम।

बन्धुलाः—वयं खलु

परगृहललिताः परान्नपुष्टाः
परपुरुषैर्जनिताः पराङ्गनासु।

गजकलभा इव बन्धुला ललामः ॥ २८ ॥

विदूषकः—

आदिशतु भवती ।

चेटी—

एत्वेत्वार्यः । इमं षष्ठं प्रकोष्ठं प्रविशत्वार्यः

विदूषकः—

( प्रविश्यावलोक्य च )

आश्चर्यं भोः, इहापि षष्ठे प्रकोष्ठेऽमूनि तावत्सुवर्णरत्नानां कर्मतोरणानि नीलरत्नविनिक्षिप्तानीन्द्रायुधस्थानमिव दर्शयन्ति । वैडूर्यमौक्तिकप्रवालकपुष्परागेन्द्रनीलकर्केतरकपद्मरागमरकतप्रभृती-न्रत्नविशेषानन्योन्यं विचारयन्ति शिल्पिनः । बध्यन्ते जातरूपैर्मा-णिक्यानि । घट्यन्ते सुवर्णालंकाराः । रक्तसूत्रेण ग्रथ्यन्ते मौक्तिका-भरणानि घृष्यन्ते धीरं वैडूर्याणि छिद्यन्ते शङ्खाः । शाणैर्घृष्यन्ते प्रवालकाः । शोष्यन्त आर्द्रकुङ्कुमप्रस्तराः । सार्यते कस्तूरिका । विशेषेण घृष्यते चन्दनरसः । संयोज्यन्ते गन्धयुक्तयः । दीयते सकर्पूरं ताम्बूलम् । अवलोक्यते सकटाक्षम् । प्रवर्तते हासः । पीयते चानवरतं ससीत्कारं मदिरा । इमे चेटाः, इमाश्चेटिकाः ।

चेटी—

एत्वेत्वार्यः । इमं सप्तमं प्रकोष्ठं प्रविशत्वार्यः ।

विदूषकः—( प्रविश्यावलोक्य च )

आश्चर्यं भोः, इहापि सप्तमे प्रकोष्ठे सुश्लिष्टविहङ्गवाटी-सुखनिषण्णान्यन्योन्यचुम्बनपराणि सुखमनुभवन्ति पारावतमिथुनानि । दधिभक्तपूरितोदरो ब्राह्मण इव सूक्तं पठति पञ्जरशुकः । इयमपरा संमाननालब्धप्रसरेव गृहदासी अधिकं कुरकुरायते मदनसारिका । अनेकफलरसास्वादप्रहृष्टकण्ठा कुम्भदासीव कूजति परपुष्टा । आल-

म्बिता नागदन्तेषु पञ्जरपरम्पराः । योध्यन्ते लावकाः । आलाप्यन्ते कपिञ्जलाः । प्रेष्यन्ते पञ्जरकपोताः । इतस्ततो विविधमणिचित्रित इवायं सहर्षं नृत्यन्रविकिरणसंतप्तपक्षोत्क्षेपैर्विधुवतीव प्रासादं गृहमयूरः । इतः पिण्डीकृता इव चन्द्रपादाः पदगतिं शिक्षमाणानीव कामिनीनां पश्चात्परिभ्रमन्ति राजहंसमिथुनानि । एतेऽपरे वृद्धमहल्लका इव इतस्ततः संचरन्ति गृहसारसाः । आश्चर्यं भोः, प्रसारणं कृतं गणिकया नानापक्षिसमूहैः । यत्सत्यं खलु नन्दनवनमिव मे गृहं प्रतिभासते । आदिशतु भवती ।

चेटी--

एत्वेत्वार्यः । इममष्टमं प्रकोष्ठं प्रविशत्वार्यः ।

विदूषकः—( प्रविश्यावलोक्य च )

भवति, क एष पट्टप्रावारकप्रावृतोऽधिकतरमत्यद्भुतपुनरुक्तालंकारालंकृतोऽङ्गभङ्गैः परिस्खलन्नितस्ततः परिभ्रमति ।

चेटी—

आर्य, एष आर्याया भ्राता भवति ।

विदूषकः—

कियत्तपश्चरणं कृत्वा वसन्तसेनाया भ्राता भवति । अथवा ।
मा तावद्यद्यप्येष उज्ज्वलः स्निग्धश्च सुगन्धश्च ।

तथापि श्मशानवीथ्यां जात इव चम्पकवृक्षोऽनभिगमनीयो लोकस्य । ( अन्यतोऽवलोक्य ) भवति, एषा पुनः का पुष्पप्रावारकप्रावृतोपानद्युगलनिक्षिप्ततैलचिक्कणाभ्यां पादाभ्यामुच्चासने उपविष्टा तिष्ठति ।

चेटी—

आर्य, एषा खल्वस्माकमार्याया माता ।

विदूषकः—

अहो अस्याः कपर्दकडाकिन्या उदरविस्तारः। तत्किमेतां प्रवेश्य महादेवमिव द्वारशोभा इह गृहे निर्मिता।

चेटी—

हताश, मैवमुपहसास्माकं मातरम्। एषा खलु चातुर्थिकेन पीड्यते।

विदूषकः—(सपरिहासम्)

भगवँश्चातुर्थिक, एतेनोपकारेण मामपि ब्राह्मणमवलोकय।

चेटी—

हताश, मरिष्यसि।

विदूषकः—(सपरिहासम्)

दास्याः पुत्रि, वरमीदृशः शूनपीनजठरो मृत एव।

सीधुसुरासवमत्ता
एतावदवस्थां गता हि माता।
यदि म्रियतेऽत्र माता
भवति शृगालसहस्रपर्याप्तिका॥ २६॥

चेटी—

आर्य, अवनमय दृष्टिम्। पश्यार्याम्।

(मृच्छकटिकात्)

# * वासवदत्ता *



## सरस्वतीस्तुतिः

करबदरसदृशमखिलं भुवनतलं यत्प्रसादतः कवयः ।
पश्यन्ति सूक्ष्ममतयः सा जयति सरस्वती देवी ॥ १ ॥

## विष्णुस्तुतिः

खिन्नोऽसि मुञ्च शैलंबिभृमो वयमिति वदत्सु शिथिलभुजः ।
भरभुग्नवितथबाहुषु गोपेषु हसन् हरिर्जयति ॥ २ ॥
कठिनतरदामवेष्टनलेखासन्देहदायिनो यस्य ।
राजन्ति वलिविभङ्गाः स पातु दामोदरो भवतः ॥ ३ ॥

## शिवस्तुतिः

स जयति हिमकरलेखा चकास्ति यस्योमयोत्कया निहिता ।
नयनप्रदीपकज्जल जिघृक्षया शिरसि रजतशुक्तिरिव ॥ ४ ॥

## सुजनप्रशंसा

भवति सुभगत्वमधिकं विस्तारितपरगुणस्य सुजनस्य ।
वहति विकासितकुमुदो द्विगुणरुचि हिमकरोद्द्योतः ॥ ५ ॥

## दुर्जनगर्हा

विषधरतोऽप्यतिविषमः खल इति न मृषा वदन्ति विद्वांसः ।
यदयं नकुलद्वेषी स कुलद्वेषी पुनः पिशुनः ॥ ६ ॥
अतिमलिने कर्तव्ये भवति खलानामतीव निपुणा धीः ।
तिमिरे हि कौशिकानां रूपं प्रतिपद्यते दृष्टिः ॥ ७ ॥

दर्पणमिव तं कुरुते तथा तथा निर्मलच्छायम् ॥ ८ ॥
विध्वस्तपरगुणानां भवति खलानामतीव मलिनत्वम् ।
अन्तरितशशिरुचामपि सलिलमुचां मलिनिमाभ्यधिकः ॥ ६ ॥

## कवेर्निर्वेदः

सा रसवत्ता विहता नवका विलसन्ति चरति नो कङ्कः ।
सरसीव कीर्तिशेषं गतवति भुवि विक्रमादित्ये ॥ १० ॥

## सुभाषित प्रशंसा

अविदितगुणापि सत्कविभणितिः कर्णेषु वमति मधुधाराम् ।
अनधिगतपरिमलापि हि हरति दृशं मालतीमाला ॥ ११ ॥

## गुणज्ञप्रशंसा

गुणिनामपि निजरूप प्रतिपत्तिः परत एव संभवति ।
स्वमहिमदर्शनमक्ष्णोर्मुकुरतले जायते यस्मात् ॥ १२ ॥

## चिन्तामणि नृपति वर्णनम्

अभूदभूतपूर्वः, सर्वोर्वीपतिचक्र चारुचूडामणिश्रेणीशाणकोणकषणनिर्मलीकृतचरणनखमणिः, नृसिंह इव दर्शितहिरण्यकशिपुक्षेत्रदानविस्मयः, कृष्ण इव कृतवसुदेवतर्पणः, नारायण इव सौकर्यसमासादितधरणीमण्डलः, कंसारातिरिव जनितयशोदानन्दसमृद्धिः आनकदुन्दुभिरिव कृतकाव्यादरः, सागरशायीव अनन्तभोगिचूडामणिमरीचिरञ्जितपादः, वरुण इवाशान्तरक्षणः, अगस्त्य इव दक्षिणाशाप्रसाधकः, जलनिधिरिव वाहिनीशतनायकः समकरप्रचारश्च, हर इव महासेनानुयातो निर्जितमारश्च, मेरुरिव विबुधालयो विश्वकर्माश्रयश्च, रवि रिव क्षणदानप्रियः छायासन्तापहरश्च, कुसुमायुध इव जनितानिरुद्धसंपत्रतिसुखप्रदश्च, विद्याधरोऽपि सुमनाः, धृतराष्ट्रोऽपि गुणप्रियः, क्षमानुगतोऽपि सुधर्माश्रयः, बृहन्नलानुभा-

वोऽपि अन्तस्सरलः, महिषीसंभवोऽपि वृषोत्पादी, अतरलोऽपि महानायकः, राजा चिन्तामणिर्नाम ।

यत्र च शासति धरां छलजातिनिग्रहप्रयोगो वादेषु, नास्तिकता चार्वाकेषु, कण्टकयोगो योगेषु, परीवादो वीणासु, खलसंयोगः शालिषु, द्विजिह्वसंगृहीतिः अहितुण्डिकेषु, करच्छेदः कुड्मलग्रहणेषु, नेत्रोत्पाटनं मुनीनाम्, राजविरुद्धता पङ्कजानाम्, सार्वभौमयोगो दिग्गजानाम्, सूचिभेदो मणीनाम्, शूलभङ्गो युवतिप्रसवेषु, अग्नितुलाशुद्धिः स्वर्णानाम्, दुश्शासनदर्शनं महाभारते, करपत्रविदारणं जलजानाम्, परमेवं व्यवस्थितम् ।

महावराहो गोत्रोद्धरणप्रवृत्तोऽपि गोत्रोद्दलनम करोत्। राघवः परिहरन्नपि जनकभुवं जनकभुवा सह वनं विवेश । भरतो रामे दर्शितभक्तिरपि राज्ये विराममकरोत् । नलस्य दमयन्त्या मिलितस्यापि पुनर्भूपरिग्रहो जातः। पृथुरपि गोत्रसमुत्सारणविस्तारितभूमण्डलः । तदित्थं नास्ति वाग्वसरः पूर्वतरेषु राजसु ।

स पुनरन्य एव देवो न्यक्कृतसर्वोर्वीपतिचक्रचरितः । तथाहि । स पर्वतः कटकसञ्चारिणो गन्धर्वान् दर्शितशृङ्गोन्नतिः सुखयन्न विरराम । स हिमालयो नावश्यायोच्छलितः, नो मायाजन्मने हितश्च । स हिमानीगिरिस्थितः, वृषध्वजश्च । स सदागतिः, अवधूताखिलकान्तारः, पावकाग्रेसरः, न भोगोत्सुकः, सुमनोहरश्च । स रत्नाकरः, अनहिभयः, अगाधः, समर्यादः नोद्रेकः विस्मयः, सदा हिमकराशयः, अमृतमयः सत्पात्रः, तस्याचलो न क्रोधः, महानदीनः, समुद्रश्च । स क्षणदानन्दकरः, कुमुदवनबन्धुः, सकलकलाकुलगृहम्, नतारातिबलः, चन्द्रश्च । स मित्रो-

दयहेतुः, काञ्चन शोभां बिभ्रत्, अचलाधिकलक्ष्मीः, सुमेरुश्च। यस्य च रिपुवर्गः सदा पार्थोऽपि न महाभारतरणयोग्यः, भीष्मोऽप्यशान्तनवेहितः, सानुचरोऽपि न गोत्रभूषितः। स त्रिशंकुरपि न नाक्षत्रपथच्युतः, शंकरोऽपि न विषादी, पावकोऽपि न कृष्णवर्त्मा, आश्रयाशोऽपि न दहनश्च, ।नान्तक इवाकस्मादपहृतजीवमः, न राहुरिव मित्रमण्डलग्रहणसंवर्धितरुचिः, न नल इव कलिविजितविग्रहः, न चक्रीव सृगालवधलब्धस्तुतिसमुल्लसितः, नन्दगोप इव यशोदयान्वितः, जरासन्ध इव घटितसन्धिविग्रहः, भार्गव इव सदानभोगः, दशरथ इव सुमित्रोपेतः सुमन्त्राधिष्ठितश्च, दिलीप इव सुदक्षिणान्वितः रक्षितगुश्च, राम इव जनितकुशलवयोरूपोच्छ्रायः।

( वासवदत्तायाः )

——:०:——

## मकरन्दोपदेशः

अथ तस्य प्रियसखो मकरन्दो नाम कथमपि लब्धप्रवेशदर्शनः कन्दर्पकेतुमुवाच।

'सखे, किमिदमसाम्प्रतमसाधुजनोचितमध्वानमाश्रितोऽसि। तवैतच्चरितमालोक्य वितर्कडोलासु निवसन्ति सन्तः। खलाः पुनस्त्वदनुचितमनिष्टमाचारमाचरन्ति। अनिष्टोद्भावनरसोत्तरं हि भवति खलहृदयम्। को नामास्य तत्वनिरूपणे समर्थः। तथाहि। भीमोऽपि नबकद्वेषी, आश्रयाशोऽपि मातरिश्वा, अतिकटुकोऽपि महारसः। सर्षपस्नेह इव करयुगलालितोऽपि शिरसा धृतोऽपि न काटवं जहाति। तालफलरस इवापातमधुरः परिणामे विरसस्तिक्तश्च। पादपराग इवावधूतोऽपि मूर्द्धानं कषाययति। विषतरुप्रसूनमिव यथायथानुभूयते, तथा तथा मोहमेव द्रढयति। नीचदेशस्येव न वारिविरहोऽस्य जायते। निदाघदिवस इव [illegible]

मनसां सन्तापं वहति। अन्धकार इव दोषानुबन्धश्चतुरः विश्वकर्मा-ऽवलोपनोद्यतश्च। रुद्र इव विरूपाक्षः, विष्णुरिव चक्रधरः, शक्राश्व इव उच्चैश्श्रवाः नदेशजप्रशंसी च। शरस्यैव विभिन्नस्यापि सतः स्नेहं दर्शयतः तक्राट्ट इव हृदयं विलोडयति। यक्षबलिरिव आत्मघोषमुखरो मण्डलभ्रमणकश्च। मातङ्ग इव स्ववशा-लोलमुखोऽधरीकृतदानश्च। वृषभ इव सुरभियानविकलः, कामीव गोत्रस्खलनविधुरो वामाध्वानुरक्तश्च। जीर्णरोग इव कलेवरे वचसि मन्दिमानं वहति। वञ्चक इव रक्तः कटपले, विभावरीरक्तश्च। परेत इव बन्धुतापदर्शनः। परशुरिव भद्रश्रियमपि खण्डयति। कुद्दाल इव दलितगोत्रः क्षमाभाजः प्राणिनश्च निकृन्तति। रतिकील इव जघन्यकर्मलग्नो ह्लेपयति साधून्। दुष्टशूर्पश्रुतिरिव काननरुचिरनुगतमपि यवसं सततं नानुमोदते। अबीजादेव जायन्ते, अकाण्डादेव प्ररोहन्ति खलव्यसनाङ्कुराः। दुरुच्छेदाश्च भवन्ति। असतां हृदि प्रविष्टो दोषलवः करालायते। सतां तु हृदयं न प्रविशत्येव। यदि कथमपि प्रविशति तदा पारद इव क्षणमपि न तिष्ठति। मृगा इव विनोदविन्दोर्वशगा न भवन्ति साधवः। सुखं जना हि भवादृशा-श्शरत्समया इव हरन्ति मित्रमण्डलस्य। न च सचेतना विसदृश मुपदिशन्ति। अचेतनानामपि मैत्री समुचितपक्षे निक्षिप्ता। तथा हि। माधुर्यशैत्यशुचित्वसन्तापशान्तिभिः पयइति शब्दसाम्याच्च मित्रतामुपगतस्य मत्संगमादभिवर्द्धितस्य क्षीरस्य क्वाथे पुरतो ममैव क्षयो युक्त इति विचिन्त्येव वारिणा क्षीयते। तदिदम-सांप्रतमाचरितम्। गृहाण साधुजनोचितमध्वानम्। साधवो हि दिङ्मोहादुत्पथप्रवृत्ता अपि पुनर्गृहीतसत्पथा भवन्ति।" इत्यादि

( वासवदत्तायाः )

## * सूर्यास्तवर्णनम् *

अत्रान्तरे भगवानपि मरीचिमाली वृत्तान्तमिमं कथयितुमिव मध्यमं लोकमवततार।

अथ वासरताम्रचूडचूडाचक्राकारः, चक्रवाकहृदयसंक्रामितसन्तापतयेव मन्दिमानमुद्वहन्, अस्तगिरिमन्दारस्तबकसुन्दरः, सिन्दूरराजिरञ्जितसुरराजकुम्भिकुम्भविभ्रमं बिभ्राणः, ताण्डवचण्डवेगोच्चलितधूर्जटिजटाजूटमकुटबद्धबन्धुरविकटवासुकिभोगमणिताटङ्कसनाभिमण्डलः, सन्ध्यासंधिनीसरसयावकपत्रचारुः, वरुणरमण्यरुणमणिकुण्डलकान्तिः कालकरवालकृत्तवासरमहिषस्कन्धचक्राकारः, मधुरमधुपूर्णकपाल इव गगनकपालिनः, अम्लानकुसुमस्तबक इव नभः-श्रियः, पुष्पगुच्छ इव गगनाशोकतरोः, कनकदर्पण इव प्रतीचीविलासिन्याः, बलभद्र इव वारुणीसंगतः सरागश्च, दुर्विध इव परित्यक्तवसुः सविषादश्च, शाक्य इव रक्तांशुकधरः, सूरिरिव संज्ञोपेतः, भगवान् दिनमणिरपराऽकूपारपयसि तरलतरङ्गवेगोच्चलितविद्रुमविटपाकृतिर्ममज्ज ।

## * सन्ध्यावर्णनम् *

ततः क्रमेण च रजोलुठितोत्थितकुलायार्थिपरस्परकलहविकलकलविङ्ककुलकलकलवाचालशिखरेषु शिखरिषु वसतिसाकाङ्क्षेषु-ध्वाङ्क्षेषु, अनवरतदह्यमानकालागरुधूपपरिमलोद्गारेषु वासागारेषु, दूर्वाञ्चिततटिनीतटनिविष्टविदग्धजनप्रस्तूयमानकथाश्रवणोत्सुकशिशुजनकलकलरवनिवारणश्रद्धेषु वृद्धेषु, आलोलिकातरलरसनाभिः कथितबहुकथाभिर्जरतीभिरतिलघुकरताडनजनितसुखे ताभिरनुगते शिशयिषमाणे शिशुजने, सन्ध्यावन्दनोप-

विष्टेषु शिष्टेषु, रोमन्थमन्थरकुरङ्गकुटुम्बकाध्यास्यमानद्रदिष्ठगौष्ठीनपृष्ठासु अरण्यस्थलीषु, निद्राविद्राणद्रोणकाककुलकलितकुलायेषु ग्रामतरुनिचयेषु, कापेयविकलकपिकुलकलिलेषु आरामतरुषु, निर्जिगमिषति जरत्तरुकोटरकुटीरकुटुम्बिनि कौशिककुले, तिमिरतर्जननिर्गतासु दहनप्रविष्टदिनकरकरशाखास्विव प्रस्फुरन्तीषु दीपलेखासु, मुखरितधनुषि वर्षति शरनिकरमशेषसांसारिकशेमुषीमुषि मकरध्वजे, शम्भलीभाषितभाजि भजति भूषां भुजिष्याजने, सैरन्ध्रीबध्यमानरशनाकलापजलपाकजघनस्थलासु जनीषु, विश्रान्तकथानुबन्धतया प्रवर्तमानानेककथकजनगृहगमनत्वरेषु चत्वरेषु, समासादितकुक्कुटेषु किरातगृहनिष्कुटेषु, कृतयष्टिसमारोहणेषु बर्हिणेषु, विहितसन्ध्यासमयव्यवस्थेषु गृहस्थेषु, सपदि संकोचोदञ्चदवाञ्चदुच्चकेसरकोटिसंकटकुशेशयोदरकोटरकुटीरकुटिलशायिनि पट्चरणचक्रे, अनेनैव पथा भगवता भास्वता गन्तव्यमिति सर्वतः पट्टमयैर्वसनैः परिवृता मणिकुट्टिमालिरिव विरचिता वरुणेन रवेः, कालकरवालकृत्तस्य दिवसमहिषस्य रुधिरधारेव, विद्रुमलतेव चरमार्णवस्य, रक्तकमलिनीव गगनतटाकस्य, काञ्चनकेतुरिव कन्दर्परथस्य, मञ्जिष्ठारागारुणपताकेव गगनहर्म्यस्थलस्य, लक्ष्मीरिव स्वयंवरगृहीतपीताम्बरा, भिक्षुकीव तारानुरागरक्ताम्बरधारिणी, बभ्रुरिव कपिलतारका, भगवती सन्ध्या समदृश्यत ।

## * तिमिर प्रचार वर्णनम् *

ततः क्षणेन क्षणदानुरागरचनाचतुरासु सन्ध्यास्विव वेश्यासु, तुलाधारशून्यायां पण्यवीथिकायामिव दिवि, घनघटमानदलपुटासु पुटकिनीषु, तिमिरप्रतिहतेष्विव तत इतः परिभ्रमत्सु कमलसरसि

मधुकरनिकरेषु, विकलकुररीकूजितच्छलेन, रविविरहविधुरासु विलपन्तीष्विव सरोजिनीषु, प्रतिफलितसन्ध्यारागरज्यमानसलिलस्थितासु पतिविनाशदुःखपीडया दहनप्रविष्टास्विव कमलिनीषु, गणक इव नक्षत्रसूचके प्रदोषे, हरकण्ठकालिमसनाभि, दैत्यबलमिव प्रकटतारकम्, भारतसमरमिव वर्धमानोलूकशकुनिकलकलम्, धृष्टद्युम्नवीर्यमिव कुण्ठितद्रोणप्रभावम्, नन्दनवनमिव संचरत्कौशिकम्, कृष्णवर्त्मज्वलनमिव निखिलकाष्ठापहारकम्, सगर्भमिव घनतरपाषाणकर्कशासु गिरितटीषु, सचक्षुरिव सुप्तप्रबुद्धसिंहनयनच्छविच्छटाकपिलेषु सानुषु, सजीवमिव तमोमणिभिः, संवर्द्धितमिवाग्निहोत्रधूमलेखाभिः, मांसलितमिव कामिनीकेशपाशसंस्कारधूपपटलैः, उद्दीपितमिव घनतरनिलीनमधुकरपटलमेचकितपेचकिकपोलतलगलितदानधाराशीकरैः, पुञ्जीकृतमिव विततततमालकाननच्छटाच्छायासु, लीयमानमिव कज्जलरसश्यामभोगिभोगेषु, प्रावरणमिव रजनीपांसुलायाः, पलितौषधमिव वृद्धवारयोषिताम्, अपत्यमिव रजन्याः, सुहृदिव कलिकालस्य, मित्रमिव दुर्जनहृदयस्य, बौद्धदर्शनमिव प्रत्यक्षद्रव्यमपह्नुवानं तिमिरमुदजृम्भत।

मुदितमिव मत्तमातङ्गमण्डलमनोहरगण्डस्थले, फलितमिवातिसान्द्रबहुलच्छदविततमालकानने, परिस्फुरितमिवातिकान्तकान्ताघनतरकेशसंहतौ, उन्मीलितमिवेन्द्रनीलरश्मिषु, अतिशयमांसलितमिवावटतटेषु, साटोपमिव स्फुटपाटवोत्कटविशङ्कटानेकविटपिविटपोत्कटस्फुटकुसुमपुटपिहितषट्पदावलिषु, घनतरघोरदन्तिघस्मरविषधरभोगभासुरम्, मदभरमत्तदन्तिदन्तद्युतितर्जनजर्जरितम्, दिवाकरोदयारम्भणमिव संकुचत्कुवलयम्, असतां महत्त्वमिव तिरस्कृतसकलान्तरम्, निमीलन्नीलोत्पलव्याजरचिताञ्जलिपुटेन नमद्दिवागतं निशापतिं तिमिरमजायत।

## * तारावर्णनम् *

अथ क्षणेनैव, सन्ध्याताण्डवाडम्बरोच्चलितमहानटजटाजूटकुटिलस्खलनविगलितजह्नुकन्यावारिधाराबिन्दव इव विकीर्णाः, दुर्धरधरणिभारखिन्नभीमदिङ्मातङ्गमण्डलकरविमुक्तशीकरच्छटा इव ततः, अतिदवीयोनभःस्थलभ्रमणखिन्नदिनकरतुरङ्गमास्यविवरवान्तफेनस्तबका इव विस्तीर्णाः, गगनमहासरःकुमुदसन्दोहसंदेहदायिनः, विश्वं गणयतो विधातुः शशिकठिनीखण्डेन तमोमषीश्यामे अजिन इव वियति संसारस्यातिशून्यत्वात् शून्यबिन्दव इव विलिखिताः, जगत्त्रयविजिगीषाविनिर्गतस्य मकरकेतो रतिकरविकीर्णा इव लाजाञ्जलयः, गुलिकास्त्रगुलिका इव विक्षिप्ताः पुष्पधनुषः, वियदम्बुराशिफेनस्तबका इव विततः, रतिविरचिता गगनाङ्गणे आतर्पणपञ्चाङ्गुलय इव, व्योमतललक्ष्मीहारमुक्तानिकरा इव विशीर्णाः, हरकोपानलदग्धकामचिताचक्रादिन्दोर्दात्याविराविप्रकीर्णाः कामकीकसखण्डा इव, तिमिरोद्गमधूमधूमलसन्ध्यानलपरितप्तगगनकटाहभृज्ज्यमानस्फुटितलाजानुकारास्तारा व्यराजन्त। एताभिः श्वित्रीव वियदशोभत।

## * निशासमयस्वभाववर्णनम् *

ततो दीर्घोच्छ्वासरचनाकुलं सुश्लेषवक्रघटनापटु सत्काव्यविरचनमिव, चक्रवाकमिथुनमतीवाखिद्यत। कमलिनीसंचरणलग्नमकरन्दबिन्दुसंदोहलुब्धमुग्धमधुकरमालारवलगानम्, कालपाशेनेव मूर्त्तिमज्ज्ञानशापेनेवाकृष्यमाणं रविविरहविधुरायाः कमलिन्या हृदयमिव द्विधापपाट चक्रवाकमिथुनम्। आगमिष्यतो हिमकरदयितस्य पार्श्वे संचरन्ती कुमुदिन्या भ्रमरमाला दूतीवालक्ष्य-

त। तारकानयनजलबिन्दुभि रस्तं गतस्य दिवाकरदयितस्य शोका-
दिव ककुभो व्यरुदन्। भास्वतो निजदयितस्य विरहादभिनवकिञ्ज-
ल्कराजिव्याजेन शोकानलमुर्मुरो नलिनीकोशहृदये जज्वाल। ततो
रविरश्मिदवाग्निभस्मीकृतगोचलमषीराशिरिव, श्रुतिवचनमिव क्षपि-
तदिगम्बरदर्शनम्, कृष्णरूपमपि तिरस्कृतविश्वरूपभावविशेषम्,
सद्यो द्रावितराजतपटद्रवप्रवाह इव, शार्वरमन्धतमसमजृम्भत।

अथ क्षणेन क्षणदाराजकन्याकन्दुक इव, कन्दर्पकनकदर्पण इव,
उदयगिरिबालमन्दारपुष्पस्तबक इव, प्राचीललनाललामललाटतट-
घटितबन्धूककुसुमतिलकबन्धाकारः, कनककुण्डलमिव नभःश्रियः,
दिग्वधूप्रसाधिकाहस्तन्यस्तालक्तकपिण्ड इव, शातकुम्भकुम्भ इव गगन-
सौधतलस्य, प्रस्थानमङ्गलकलश इव त्रिभुवनविजयविनिर्गतस्य
कस्यापि, गगनगामिविद्याधरीकरतलावस्थितलीलाशुकपञ्जर इव,
पूर्वाचलशिखरविश्रान्तकिन्नरमिथुनरक्तवस्त्रकञ्चुकितवीणालाबुरिव,
गरुड इव हरिणाधिष्ठितः, राम इव लक्ष्मणान्वितः, वानरेन्द्र इव
अनुरक्तताराः, वृषभ इव रोहिणीप्रियः, सुराजेव रक्तमण्डलः,
जाम्बवानिव ऋक्षपरिवृतो रजनीपतिरुदयमाससाद।

ततश्चक्राङ्गनानयनयुगलपीत इव, रक्तकुमुदकोशालीढ इव,
क्षीणतां जगाम क्षणेन क्षणदाकरगतो रागः। अनन्तरं शर्वरीव्रजा-
ङ्गनाविष्कृतनूतननवनीतस्वस्तिक इव, कुसुमकेतोर्मुखच्छायामुद्रित
इव मुकुरः, श्वेतातपत्रमिव मकरकेतोः, दन्तपालिचक्रमिव
वियन्महाखड्गस्य, श्वेतचामरमिव गगनमहाराजस्य, बालपुलिनमिव
निशायमुनायाः, स्फाटिकलिङ्गमिव गगनमहातापसस्य, अण्डमिव
कालोरगस्य, कम्बुरिव गगनमहार्णवस्य, स्फाटिककमण्डलुरिव
तमोव्रतिनः, चैत्यमिव मदनारिदग्धस्य मकरकेतोः, चिताचक्रमिव

कलङ्ककालाङ्गारशबलं सङ्कल्पजन्मनः, पुण्डरीकमिव गगनगामि-गङ्गायाः, फेनसञ्चय इव गगनमहार्णवस्य, पारदपिण्ड इव कालधातुवादिनः, राजतकलश इव दूर्वाप्रवालशबलो मनोभवा-भिषेकस्य, श्वेतचक्रमिव कालरथस्य, चूडामणिरिव उदय-गिरिनागराजस्य, श्वेतपारावत इव अम्बरमहाप्रासादस्य, गगनसरि-द्धौतसिन्दूरं कुम्भस्थलमिवैरावतस्य, भुग्नश्टङ्गपुराणगोमुण्डख-ण्ड इव ताराश्वेतगोधूमशालिनो नभःक्षेत्रस्य, मलयजपिण्डपाण्डु-रराजततालवृन्तमिव सिद्धाङ्गनाहस्तविभ्रस्तम्, क्षीणरागोभगवा-नुडुपतिरुज्जगाम । यश्च पुण्डरीकं लोकलोचनमधुकराणाम्, शयनी-यसैकतं चित्तराजहंसानाम्, स्फाटिक व्यजनं च यामिनीकामिन्याः।

( वासवदत्तायाः )



# ※ श्री पुलकेशिनः शिलालेखः ※

जयति भगवाञ्जिनेन्द्रो······ज······रक्षणजन्मनो यस्य ।
ज्ञानसमुद्रान्तर्गतमखिलं जगदन्तरीपमिव ॥ १ ॥

तदनु चिरमपरिमेयश्चलुक्यकुलविपुलजलनिधिर्जयति ।
पृथिवीमौलिललामो यः प्रभवः पुरुषरत्नानाम् ॥ २ ॥

शूरे विदुषि च विभजन्दानं मानं च युगपदेकत्र ।
अविहितयाथातथ्यो जयति च सत्याश्रयः सुचिरम् ॥ ३

पृथिवीवल्लभशब्दो येषामन्वर्थतां चिरं जातः ।
तद्वंशे ( श्ये ) षु जिगीषुषु तेषु बहुष्वप्यतीतेषु ॥ ४ ॥

नानाहेतिशताभिघातपतितभ्रान्ताश्वपत्तिद्विपे
नृत्यद्भीमकबन्धखड्गकिरणज्वालासहस्रे रणे ।
लक्ष्मीर्भावितचापलादिव कृता शौर्येण येनात्मसा-
द्राजासीज्जयसिंहवल्लभ इति ख्यातश्चलुक्यान्वयः ॥ ५ ॥

तदात्मजोऽभूद्रणरागनामा दिव्यानुभावो जगदेकनाथः ।
अमानुषत्वं किल यस्य लोकः सुप्तस्य जानाति वपुः प्रकर्षात् ॥६॥

तस्याभवत्तनूजः पुलकेशी यः श्रितेन्दुकान्तिरपि ।
श्रीवल्लभोऽप्ययासीद्वातापिपुरीवधूवरताम् ॥ ७ ॥

यत्त्रिवर्गपदवीमलं क्षितौ नानुगन्तुमधुनापि राजकम् ।
भूश्च येन हयमेधयाजिना प्रापितावभृथमज्जना बभौ ॥ ८ ॥

नलमौर्यकदम्बकालरात्रिस्तनयस्तस्य बभूव कीर्तिवर्मा ।
परदारनिवृत्तचित्तवृत्तेरपि धीर्यस्य रिपुश्रियानुकृष्टा ॥ ९ ॥

रणपराक्रमलब्धजयश्रिया सपदि येन विरुग्णमशेषतः ।
नृपतिगन्धगजेन महौजसा पृथुकदम्बकदम्बकदम्बकम्[1] ॥ १० ॥

---

१ कदम्बाः केचन क्षत्रियास्त एव कदम्बाः वृक्षविशेषास्तेषां कदम्बकं समूहम्

तस्मिन्सुरेश्वरविभूतिगताभिलाषे
राजाभवत्तदनुजः किल मङ्गलीशः ।
यः पूर्वपश्चिमसमुद्रतटोषिताश्वः
सेनारजःपटविनिर्मितदिग्वितानः ॥ ११ ॥
स्फुरन्मयूखैरसिदीपिकाशतैर्व्युदस्य मातङ्गतमिस्रसंचयम् ।
अवाप्तवान्यो रणरङ्गमन्दिरे कलच्चुरि श्रीललनापरिग्रहम् ॥ १२ ॥
पुनरपि च जिघृक्षोः सैन्यमाक्रान्तसालं
रुचिरबहुपताकं रेवतीद्वीपमाशु ।
सपदि महदुदन्वत्तोयसंक्रान्तबिम्बं
वरुणबलमिवाभूदागतं यस्य वाचा ॥ १३ ॥
तस्याग्रजस्य तनये नहुषानुभावे
लक्ष्म्या किलाभिलषिते पुलकेशिनाम्नि ।
सासूयमात्मनि भवन्तमतः पितृव्यं
ज्ञात्वापरुद्धचरितव्यवसायबुद्धौ ॥ १४ ॥
स यदुपचितमन्त्रोत्साहशक्तिप्रयोग-
क्षपितबलविशेषो मङ्गलीशः समन्तात् ।
स्वतनयगतराज्यारम्भयत्नेन सार्धं
निजमतनु च राज्यं जीवितं चोज्झति स्म ॥ १५ ॥
तावत्तच्छत्रभङ्गे जगदखिलमरात्यन्धकारोपरुद्धं
यस्यासह्यप्रतापद्युतिततिभिरिवाक्रान्तमासीत्प्रभातम् ।
नृत्यद्विद्युत्पताकैः प्रजविनि मरुति क्षुण्णपर्यन्तभागै-
र्गर्जद्भिर्वारिवाहैरलिकुलमलिनं व्योम या (जा) तं कदा वा ॥१६॥
लब्ध्वा कालं भुवमुपगते जेतुमाप्यायिकाख्ये
गोविन्दे च द्विरदनिकरैरुत्तराम्भोधिरथ्याः ।
यस्यानीकैर्युधि भयरसज्ञत्वमेकः प्रयात-

स्तन्त्रावाप्तं फलमुपकृतस्यापरेणापि सद्यः ॥ १७ ॥

वरदातुङ्गतरङ्गरङ्गविलसद्धंसां नदीमेखलां
वनवासीमवमृद्नतः सुरपुरप्रस्पर्धिनीं संपदा ।
महता यस्य बलार्णवेन परितः संछादितोर्वीतलं
स्थलदुर्गं जलदुर्गतामिव गतं तत्तत्क्षणे पश्यताम् ॥ १८ ॥

गङ्गाम्बु पीत्वा व्यसनानि सप्त हित्वा पुरोपार्जितसंपदोऽपि ।
यस्यानुभावोपनताः सदासन्नासन्नसेवामृतपानशौण्डाः ॥ १९ ॥

कोङ्कणेषु यदादिष्टचण्डदण्डाम्बुवीचिभिः ।
उदस्तास्तरसा मौर्यपल्वलाम्बुसमृद्धयः ॥ २० ॥

अपरजलधेर्लक्ष्मीं यस्मिन्पुरीं पुरभित्प्रभे
मदगजघटाकारैर्नावां शतैरवमृद्नति ।
जलदपटलानीकाकीर्णं नवोत्पलमेचकं
जलनिधिरिव व्योम व्योम्नः समोऽभवदम्बुधिः ॥ २१ ॥

प्रतापोपनता यस्य लाटमालवगूर्जराः ।
दण्डोपनतसामन्तचर्या वर्या इवाभवन् ॥२२ ॥

अपरिमितविभूतिस्फीतसामन्तसेना-
मुकुटमणिमयूखाक्रान्तपादारविन्दः ।
युधि पतितगजेन्द्रानीकबीभत्सभूतो
भयविगलितहर्षो येन चाकारि हर्षः ॥ २३ ॥

भुवमुरुभिरनीकैः शासतो यस्य रेवा
विविधपुलिनशोभावन्ध्यविन्ध्योपकण्ठा ।
अधिकतरमराजत्स्वेन तेजोमहिम्ना
शिखरिभिरिभवर्ज्या वर्ष्मणां स्पर्धयेव ॥ २४ ॥

विधिवदुपचिताभिः शक्तिभिःशक्रकल्प-
स्तिसृभिरपि गुणौघैः स्वैश्च माहाकुलाद्यैः ।

अनमदधिपतित्वं यो महाराष्ट्रकाणां
नवनवतिसहस्रग्रामभाजां त्रयाणाम् ॥ २५ ॥
गृहिणां स्वगुणैस्त्रिवर्गतुङ्गा विहितान्यक्षितिपालमानभङ्गाः ।
अभवन्नुपजातभीतिलिङ्गा यदनीकेन सकोसलाः कलिङ्गाः ॥२६ ॥
पिष्टं पिष्टपुरं येन जातं दुर्गमदुर्गमम् ।
चित्रं यस्य कलेर्वृत्तं जातं दुर्गमदुर्गमम् ॥ २७ ॥
संनद्धवारणघटास्थगितान्तरालं
नानायुधक्षतनरक्षतजाङ्गरागम् ।
आसीज्जलं यदवमर्दितमभ्रगर्भा-
र्कणालमम्बरमिवोर्जितसांध्यरागम् ॥ २८ ॥
उद्भूतामलचामरध्वजशतच्छत्रान्धकारैर्बलैः
शौर्योत्साहरसोद्धतारिमथनैर्मौलादिभिः षड्विधैः ।
आक्रान्तात्मबलोन्नतिं बलरजः-संछन्नकाञ्चीपुरः
प्राकारान्तरितप्रतापमकरोद्यः पल्लवानां पतिम् ॥ २९ ॥
कावेरी द्रुतशफरीविलोलनेत्रा
चोलानां सपदि जयोद्यतस्य यस्य ।
प्रश्च्योतन्मदगजसेतुरुद्धनीरा
संस्पर्शं परिहरति स्म रत्नराशेः ॥३०॥
चोलकेरलपाण्ड्यानां योऽभूत्तत्र महर्द्धये ।
पल्लवानीकनीहारतुहिनेतरदीधितिः ॥ ३१ ॥
उत्साहप्रभुमन्त्रशक्तिसहिते यस्मिन्समन्ताद्दिशो
जित्वा भूमिपतीन्विसृज्य महितानाराध्य देवद्विजान् ।
वातापीं नगरीं प्रविश्य नगरीमेकामिवोर्वीमिमां
चञ्चन्नीरधिनीरनीलपरिखां सत्याश्रये[1] शासति ॥ ३२ ॥
त्रिंशत्सु त्रिसहस्रेषु भारतादाहवादितः ।

---

१ सत्याश्रय इति पुलके शिमहीपतेर्नामान्तरम्

सहाब्दशतयुक्तेषु श (ग) तेष्वब्देषु पञ्चसु ( १७३५ ) ॥ ३३ ॥
पञ्चाशत्सु कलौ काले षट्सु पञ्चशतासु च ( ५५६ ) ।
समासु समतीतासु शकानामपि भूभुजाम् ॥ ३४ ॥
तस्याम्बुधित्रयनिवारितशासनस्य
सत्याश्रयस्य परमाप्तवता प्रसादम् ॥
शैलं जिनेन्द्रभवनं भवनं महिम्नां
निर्मापितं मतिमता रविकीर्त्तिनेदम् ॥ ३५ ॥
प्रशस्तेर्वसतेश्चास्या जिनस्य त्रिजगद्गुरोः ।
कर्ता कारयिता चापि रविकीर्तिः कृती स्वयम् ॥ ३६ ॥
येनायोजि नवेऽश्मस्थिरमर्थविधौ विवेकिना जिनवेश्म ।
स विजयतां रविकीर्तिः कविताश्रितकालिदासभारविकीर्तिः॥३७॥



# * हर्षचरितम् *

## * देव्या यशोवत्याश्चितारोहणनिश्चयः *

प्रशान्ते च मन्युवेगे सस्नेहमुत्थापयामास सुतम्। हस्तेन चास्य प्ररुदितस्य दृष्टिमुन्ममार्ज। स्वयमपि राजतराजहंसास्यसमुद्गीर्णेन पयसा प्रक्षाल्य मुखकमलं कलमूकलोकविधृते वासःशकले शुचिनि समुन्मृज्य पाणी सुतवदनविनिहितनिभृतनयनयुगला चिरं स्थित्वा पुनः पुनरायतं निश्वस्यावादीत्।

'वत्स' नासि न प्रियो निर्गुणो वा परित्यागार्हो वा। स्तन्येनैव सह त्वया पीतं मे हृदयम्। अस्मिंश्च समये प्रभूतप्रभुप्रसादान्तरिता त्वां न पश्यति दृष्टिः। अपि च पुत्रक, पुरुषान्तरविलोकनव्यसनिनी राज्योपकरणमकरुणा वा नास्मि लक्ष्मीः क्षमा वा। कुलकलत्रमस्मि चारित्रधना धर्मधवले कुले जाता। किं विस्मृतोऽसि मां समरशतशौण्डस्य पुरुषप्रकाण्डस्य केसरिण इव केसरिणीं गृहिणीम्। वीरजा वीरजाया वीरजननी च मादृशी पराक्रमक्रीता कथमन्यथा कुर्यात्।

एवंविधेन पित्रा ते भरतभगीरथनाभागनिभेन नरेन्द्रवृन्दारकेण गृहीतः पाणिः। आसेवितः सेवासंभ्रान्तानन्तसामन्तसीमन्तिनीसमावर्जितजाम्बूनदघटाभिषेकः शिरसा। लब्धो मनोरथदुर्लभो महादेवीपट्टबन्धसत्कारलाभो ललाटेन। आपीतौ सुस्निग्धैः पुत्रै रमित्रकलत्रवन्दीवृन्दविधूयमानचामरमरुच्चलचीनांशुकधरौ पयोधरौ। सपत्नीनां शिरःसु निहितं नमिताखिलकटककुटुम्बिनीकिरीटमाणिक्यमालार्चितं चरणयुगलकम्। एवं कृतार्थसर्वावयवा

किमपरमपेक्षे क्षीणपुण्या। मर्तुमविघ्नवैव वाञ्छामि। न च शक्नोमि दग्धस्य भर्तुरार्यपुत्रविरहिता रतिरिव निरर्थकान्प्रलापान्कर्तुम्। पितुश्च ते पादधूलिरिव प्रथमं गगनगमनमावेदयन्ती बहुमता भविष्यामि शूरानुरागिणीनां सुराङ्गनानाम्। प्रत्यग्रकष्टदारुणदुःखदग्धायाश्च मे किं धक्ष्यति धूमध्वजः। मरणाच्च मे जीवितमेवास्मिन्समये साहसम्। अतिशीतलः पतिशोकानलादक्षयस्नेहेन्धनादस्मादनलः। कैलासकल्पे प्रवसति जीवेश्वरे जरत्तृणकणिकालघीयसि जीविते लोभ इति क्व घटते। अपि च जीवन्तीमपि मां नरपतिमरणावधीरणमहापातकिनीं न स्प्रक्ष्यन्ति पुत्र! पुत्रराज्यसुखानि। दुःखदग्धानां च भूतिरमङ्गला चाप्रशस्ता च निरुपयोगा च भवति। वत्स, विश्वस्तानां यशसा स्थातुमिच्छामि लोके न वपुषा। तदहमेव त्वां तावत्तात! प्रसादयामि न पुनर्मनोरथप्रातिकूल्येन कदर्थनीयास्मि।' इत्युक्त्वा पादयोरपतत्।

( पंचमोच्छ्वासात् )

### * मालवराजपराजयाय राज्यवर्धनप्रयाणम् *

अथ संभ्रान्तो भ्रात्रा सह स्वयं देवो राज्यवर्धनस्तं पर्यपृच्छत्—'भद्र' भण किमस्मद्व्यसनमव्यवसायवर्धनबद्धधृतिः, अवनिपतिमरणमुदितमतिः, अधृतिकरमपरमधिकतरमितः समुपनयति विधिः' इति। स कथं कथमप्यकथयत्—'देव' पिशाचानामिव नीचात्मनां चरितानि छिद्रप्रहारीणि प्रायशो भवन्ति। यतो यस्मिन्नहन्यवनिपतिरुपरत इत्यभूद्वार्ता तस्मिन्नेव देवो ग्रहवर्मा दुरात्मना मालवराजेन जीवलोकमात्मनः सुकृतेन सह त्याजितः। भर्तृदारिकापि राज्यश्रीः कालायसनिगडयुगलचुम्बितचरणा चौराङ्गनेव संयता कान्यकुब्जे कारायां निक्षिप्ता। किंवदन्ती च यथा किलाऽ-

नायकं साधनं मत्वा जिघृक्षुः सुदुर्मतिरेतामपि भुवमाजिगमिषति।'
इति विज्ञापिते प्रभुः प्रभवतीति।

ततश्च तादृशमनुपेक्षणीयमसंभावितमाकस्मिकमपरं व्यतिकरमाकर्ण्याश्रुतपूर्वत्वात्परिभवस्य, परपरिभवासहिष्णुतया च स्वभावस्य, दर्पबहुलतया च नवयौवनस्य, वीरक्षेत्रसंभवत्वाच्च जन्मनः, कृपाभूमिभूतायाश्च स्वसुः स्नेहात्, स तादृशोऽपि बद्धमूलोऽप्यत्यन्तगुरुरेकपद एवास्य ननाश शोकावेगः। विवेश च सहसा केसरीव गिरिगुहागृहं गम्भीरं हृदयं भयंकरः कोपावेगः। केशिनिषूदनशङ्काकुलकालियकुलभङ्गुरभ्रूभङ्गतरङ्गिणी श्यामायमाना यमस्वसेव प्रथीयसि ललाटपट्टे भीषणा भ्रुकुटिरुदभिद्यत। दर्पात्परामृशन्नजकिरणसलिलनिर्झरैः समरभारसंभावनाभिषेकमिव चकार दिङ्नागकुम्भकूटविकटस्य बाहुशिखरकोशस्य वामः पाणिपल्लवः। संगलत्स्वेदसलिलपूरितोदरो निर्मूलं मालवोन्मूलनाय गृहीतकेश इव दुर्नदश्रीकचग्रहोत्कण्ठयेव च कम्पमानः पुनरपि समुत्ससर्प भीषणं कृपाणं पाणिरपरः। शस्त्रग्रहणमुदितराजलक्ष्मीक्रियमाणदिग्वृद्धिविधुतसिन्दूरधूलिरिव कपिलः कपोलयोरदृश्यत रोषरागः। समासन्नसकलमहीपालचूडामणिचक्राक्रमणजाताहंकार इव च समारुरोह वामभुजदण्डमुखानितश्चरणो दक्षिणः।

अथ तथाविधोऽनुजमवादीत्—'आयुष्मन्, इदं राजकुलम्, अमी बान्धवाः, परिजनोऽयम्, इयं भूमिः, भूपतिभुजपरिपालिताश्चैताः प्रजाः' गतोऽहमद्यैव मालवराजकुलप्रलयाय। इदमेव तावद्वल्कलग्रहणम्, इदमेव तपः, शोकापगमोपायश्चायमेव यदत्यन्ताविनीतारिनिग्रहः। सोऽयं कुरङ्गकैः कचग्रहः केसरिणः, भेकैः करघातः कालसर्पस्य, वत्सकैर्बन्दिग्रहो व्याघ्रस्य, अलगर्दैर्गलग्रहो गरुडस्य, दारुभिर्दाहादेशो दहनस्य, तिमिरै

स्तिरस्कारो रवेः, यो मालवैः परिभवः पुष्पभूतिवंशस्य। अन्तरितस्तापो मे महीयसा मन्युना। तिष्ठन्तु सर्व एव राजानः करिणश्च त्वयैव सार्धम्। अयमेको भण्डिरयुतमात्रेण तुरङ्गमाणामनुयातु माम्।' इत्यभिधाय चानन्तरमेव प्रयाणपटहमादिदेश।

तं च तथा समादिशन्तमाकर्ण्य आत्मजामातृवृत्तान्तविज्ञानप्रकोपाधानदूयमाने मनसि निवर्तनादेशेन दूरप्ररूढप्रणयपीड इव प्रोवाच देवो हर्षः—'कमिव दोषं पश्यत्यार्यो ममानुगमनेन। यदि बाल इति नितरां तर्हि न त्याज्योऽस्मि, रक्षणीय इति भवद्भुजपञ्जरं रक्षास्थानम्, अशक्त इति क्व परीक्षितोऽस्मि, संवर्धनीय इति वियोगस्तनूकरोति, अक्लेशसह इति स्त्रीपक्षे निक्षिप्तोऽस्मि, सुखमनुभवत्विति त्वयैव सह तद्यात्रति, महानध्वनः क्लेश इति विरहोऽपि महत्तरः, कलत्रं रक्षत्विति श्रीस्ते निस्त्रिंशमधिवसति, पृष्ठतस्तिष्ठत्विति तिष्ठत्येव प्रतापः, राजकमनधिष्ठितमिति तत्सुबद्धमार्यगुणैः, न बाह्यः सहायो महत इति व्यतिरिक्तमिव मां गणयति, प्रलघुपरिकरः प्रयामीति पादरजसि कोऽतिभार, द्वयोर्गमनमसाम्प्रतमिति मामनुगृहाण गमनाज्ञया, कातरो भ्रातृस्नेह इति सदृशो दोषः। का चेयमात्मंभरिता भुजस्य ते यदेकाकी क्षीरोदफेनपटलपाण्डुरममृतमिव यशः पिपासति। अतिक्षितपूर्वोऽस्मि प्रसादेषु। तत्प्रसीदत्वार्यो नयतु मामपि' इत्यभिधाय क्षितितलविनिहितमौलिः पादयोरपतत्।

तमुत्थाप्य पुनरग्रजो जगाद—'तात किमेवमतिमहारम्भपरिग्रहणेन गरिमाणमारोपयते बलादतिलघीयानप्यहितः। हरिणार्धमतिहेपणः सिंहसंभारः। तृणानामुपरि कति कवचयन्त्याशुशुक्षणयः॥ अपि च तवाष्टादशद्वीपाष्टमङ्गलकमालिनी मेदिन्यस्त्येव विक्रमस्य

विषयः। नहि कुलशैलनिवहवाहिनो वायवः संनह्यन्त्यतितरले तूल-राशौ। न सुमेरुवप्रप्रणयप्रगल्भा वा दिक्करिणः परिणमन्त्यणीयसि वल्मीके। ग्रहीष्यसि सकलपृथ्वीपतिप्रलयोत्पातमहाधूमकेतुं सांप्रा-तेव चारुचामीकरपत्रलतालंकाराङ्ककार्यं कार्मुकं ककुभां विजये। मम तु दुर्निवारायामस्यां विपक्षक्षपणक्षुधि क्षुभितायां क्षम्यतामयमेकाकिनः कोपकवल एकः। तिष्ठतु भवान्।' इत्यभिधाय च तस्मिन्नेव वासरे निर्जगामाभ्यमित्रम्।

( श्रीहर्षचरितात् )

### ❋ सेनापतेः सिंहनादस्य वक्तृता ❋

'देव' न कश्चित्कृताश्रयया मलिनया मलिनतराः कोकिलया काका इव कापुरुषा हतलक्ष्म्या विप्रलभ्यमानमात्मानं न चेतयन्ते। श्रियो हि दोषान्धतादयः कामला विकाराः। छत्रच्छायान्तरित-रवयो विस्मरन्त्यन्यं तेजस्विनं जडधियः। किं वा करोतु वराकः येनातिभीरुतया नित्यपराङ्मुखेन नतु दृष्टान्येव सर्वातिशायिशौर्यातिशयश्वयथुकपिलकपोलपुलकपल्लवितकोपानलानि कुपितानां तेजस्विनां मुखानि।

नासौ तपस्वी जानात्येवं यथाभिचारा इव विप्रकृताः सद्यः सकलकुलप्रलयमुपहरन्ति मनस्विनः। जलेऽपि ज्व-लन्ति ताडितास्तेजस्विनः। सकलवीरगोष्ठीबाह्यस्य तस्यैवेदमुचित मनुत्तारनिरयनिपातनिपुणं कर्म। मनस्विनां हि प्रधनप्रधानधने धनुषि भ्रियमाणे, सति च कमलाकलहंसीकेलिकुवलयकानने कृपाणे कृपणो-पायाः पयोधिमथनप्रभृतयोऽपि श्रीसमुत्थानस्य किं पुनरीदृशाः। येषां च धात्रा धरित्रीं त्रातुं नियुक्ताः स्वयमसमर्था इव कुलिशकर्क-शभुजपरिघग्रहणहेतोरुद्भिरन्ति गिरयोऽपि लोहानि ते कथमिव

बाहुशालिनो मनसाऽपि विमलयशोबान्धवा ध्यायेयुरकार्यम्। सर्वग्रहाभिभवभास्वराणां हि सुभटकराणामग्रतो दिग्ग्रहणे पङ्गवः पतङ्गकराः। महामहिषशृङ्गतरङ्गभङ्गभङ्गुरभीषणान्तराला लोकप्रवादमात्रेण दक्षिणाशा परमार्थतो भटभ्रुकुटिरधिवासो यमस्य।

चित्रं च यदुन्मुक्तसिंहनादानां सहसा साहसरसरोमाञ्चकण्टकनिकरेण सह न निर्यान्ति सटाः शूराणां रणेषु। इयमेव च चतुःसागरसंभूतस्य भूतिसंभारस्य भाजनं प्रतिपक्षदाहि दारुणं वडवामुखं वा महापुरुषहृदयं वा। तेजस्विनः सकलाननत्रापय पयोराशिसहजस्य कुतो निवृत्तिरुष्मणः। वृथाविततविपुलफणाभारो भुजङ्गानां भर्ता—बिभर्ति यो भोगेन मृत्पिण्डमेव केवलम्। अप्रतिहतशासनाक्रान्त्युपभोगसुखरसं तु रसाया दिक्कुञ्जरकर भारभास्वरप्रकोष्ठा वीरबाहव एव जानन्ति। रविरिवोन्मुखपद्माकरगृहीतपादपल्लवः सुखेनाखण्डिततेजा दिवसान्नयति शूरः।

कातरस्य तु शशिन इव हरिणहृदयस्य पाण्डुरपृष्ठस्य कुतो छिरात्रमपि निश्चला लक्ष्मीः। अपरिमितयशःप्रकरवर्षी विकासी वीररसः। पुरःप्रवृत्तप्रतापप्रहताः पन्थानः पौरुषस्य। शब्दविद्रुतद्विषन्ति भवन्ति द्वाराणि दर्पस्य। शस्त्रालोकप्रकाशिताः शून्या दिशः शौर्यस्य। रिपुरुधिरशीकरासारेण भूरिव श्रीरप्यनुरज्यते। बहुनरपतिमुकुटमणिशिलाशाणकोणकषणेन चरणनखराजिरिव राजताप्युज्ज्वलीभवति। अनवरतशस्त्राभ्यासेन करतलानीव रिपुमुखानि श्यामीभवन्ति। विविधव्रणबद्धपट्टकशतैः शरीरमिव यशोऽपि धवलीभवति। कवचिषु रिपूरःकवाटेषु पात्यमानाः पावकशिखामिव श्रियमपि वमन्ति निष्ठुरा निस्त्रिंशप्रहाराः। यश्चाहितहतस्वजनो मनस्विजनो द्विषद्योषिदुरस्ताडनेन कथयति हृदयदुः-

खम्, परुषासिलतानिपातपवनेनोच्छ्वसिति, निरुच्छ्वसितशत्रुशरीरा-श्रुधारापातेन रोदिति विपक्षवनिताचक्षुषा ददाति जलं स श्रेया-न्नेतरः। न च स्वप्नदृष्टनष्टेष्विव क्षणिकेषु शरीरेषु निबध्नन्ति वस्तुबुद्धिं प्रबुद्धाः। स्थायिनि यशसि शरीरधीर्वीराणाम्। अनवरतप्रज्वलिततेजःप्रसरभास्वरस्वभावं च मणिप्रदीपमिव कलुषः कज्जलमलो न स्पृशत्येव तेजस्विनं शोकः।

स त्वं सत्त्ववतामग्रणीः, प्राग्रहरः प्राज्ञानां, प्रथमः समर्थानां, मुख्योऽभिजातानाम्, अग्रेसरस्तेजस्विनाम्, आदिरसहिष्णूनाम्। एता-श्च सततसंनिहितधूमायमानकोपाग्नयः, शुभ्रासिधारातोयतृष्णयो, विकटबाहुवनच्छायोपगूढा धीरताया निवासशिशिरभूमयः स्वायत्ताः सुभटानामुरःकवाटभित्तयः। यतः, किं गौडाधिपेनैकेन। तथा कुरु यथा नान्योऽपि कश्चिदाचरत्येवं भूयः। सर्वोर्वी-भृत्कार्मुकानामलीकविजिगीषूणां संचारय चामराण्यन्तःपुर-पुरंध्रिनिश्वसितैः। उच्छिन्धि रुधिरगन्धान्धगृध्रमण्डलच्छादनैश्छ-त्रच्छायाव्यसनानि। अपाकुरु कदुष्णशोणितोदकस्वेदैः कुलस्त्रीकु-लटाकटाक्षचक्षूरागरोगान्। उपशमय निशितशरशिरोवेधैरकार्यशौ-र्यश्वयथून्। उन्मूलय लोहनिगडापीडमालामलमहौषधैः पादपीठदोहद-दुर्ललितपादपद्मान्ध्यानि। क्षपय तीक्ष्णशास्त्रक्षारपातैर्जयशब्दश्रवण-कर्णकण्डूः। अपनय चरणनखमरीचि चन्दनचर्चाललाटलेपैरनमितस्ति-मित मस्तकस्तम्भविकारान्। उद्धर करदानसंदेशसंदंशैर्द्रविणदर्पोष्मा-यमाणदुःशीललीलाशल्यानि। भिन्धि मणिपादपीठदीधितिप्रदीपिकाभिः शुष्कसुभटाटोपभ्रुकुटिबन्धान्धकारान्। जय चरणलङ्घनलाघवगलित-शिरोगौरवारोग्यैर्मिथ्याभिमानमहासंनिपातान्। मृदय सततसेवा-ञ्जलिमुकुलितकरसंपुटोष्मभिरिष्वसनगुणकिणकार्कश्यानि।

येनैव ते गतः पिता पितामहः प्रपितामहो वा तमेव मा हासीस्त्रिभुवनस्पृहणीयं पन्थानम् । अपहाय कुपुरुषोचितां शुचं प्रतिपद्यस्व कुलक्रमागतां केसरीव कुरङ्गीं राजलक्ष्मीम् । देव, देवभूयं गते नरेन्द्रे दुष्टगौडभुजङ्गजग्धजीविते च राज्यवर्धने, वृत्तेऽस्मिन्महाप्रलये धरणीधारणायाधुना त्वं शेषः । समाश्वासय अशरणाः प्रजाः । क्ष्मापतीनां शिरःसु शरत्सवितेव ललाटंतपान्प्रयच्छ पादन्यासान् । अहितानामभिनवसेवादीक्षादुःखसंतप्तश्वासधूममण्डलैर्नखपचैः प्रचलितचूडामणिचक्रवालबालातपैश्चायाहि कलनापपादताम् ।

अपि च हते पितर्येकाकी तपस्वी मृगैः सह संवर्धितः सहजब्राह्मण्यमार्दवसुकुमारमनाः कृतनिश्चयश्चण्डचापवनाऽटनिटांकारनादनिर्मचीकृतदिग्गजं, गुञ्जज्ज्याजालजनितजगज्ज्वरं, समग्रमुद्यतमेकविंशतिकृत्वः क्षत्रवंशमुत्खातवान्राजन्यकं परशुरामः । किं पुनर्नैसर्गिककायकार्कश्यकुलिशायमानमानसो मानिनां मूर्धन्यो देवः । तदद्यैव कृतप्रतिज्ञो गृहाण गौडाधमजीवितध्वस्तये जीवितसंकलनाकुलकालाकाण्डदण्डयात्राचिह्नध्वजं धनुः । न ह्ययमरातिरक्तचन्दनचर्चाशिशिरोपचारमन्तरेण शाम्यति परिभवानलपच्यमानदेहस्य देवस्य दुःखदाहज्वरः सुदारुण[illegible] निकारसंतापशान्त्युपायपरिक्षये हि हिडिम्बाचुम्बनास्वादितमिव रिपुरुधिरामृतममन्दरोपायमपायि पवनात्मजेन । जामदग्न्येन च शाम्यन्मन्युशिखिशिखासंज्वरसुखायमानस्पर्शशीतलेषु क्षत्रियक्षतजह्रदेष्वस्नायि ।' इत्युक्त्वा व्यरंसीत् ।

( षष्ठोच्छ्वासात् )

## * श्री हर्षदेवस्य वक्तृता *

देवस्तु हर्षस्तं प्रत्यवादीत्—'करणीयमेवेदमभिहितं मान्येन । इतरथा हि मे गृहीतभुवि भोगिनाथेऽपि दायादद्वेषिरोर्ष्यालोर्मु-

जस्य। उपरि गच्छतीच्छति निग्रहाय ग्रहगणेऽपि भ्रूलता चलि-तुम्। अनमत्सु शैलेष्वपि कचग्रहमभिलषति दातुं करः। तेजोवुर्वि-दग्धानर्ककरानपि चामराणि ग्राहयितुमीहते हृदयम्। राजशब्दरुषा मृगराजानामपि शिरांसि वाञ्छति पादः पादपीठीकर्तुम्। स्वच्छन्दलो-कपालस्वेच्छागृहीतानामाक्षेपादेशाय दिशामपि स्फुरत्यधरः किं पुनरीदृशे दुर्जाते जाते जातामर्षनिर्भरे च मनसि नास्त्येवावकाशः शोकक्रियाकरणस्य।

अपि च हृदयविषमशल्ये मुसल्ये जीवति जाल्मे जगद्विगर्हिते गौडाधिपाधमचण्डाले जिह्वेमि शुष्काधरपुटः पोटेव प्रतिकारशून्यं शुचा सूत्कर्तुम्। अकृतरिपुबलाऽबलाविलोचनोदकदुर्दिनस्य मे कुतः करयुगलस्य जलाञ्जलिदानम्। अदृष्टगौडाधमचिताधूममण्ड-लस्य वा चक्षुषः स्वल्पमप्यश्रुसलिलम्।

श्रूयतां मे प्रतिज्ञा शपाम्यार्यस्यैव पादपांशुस्पर्शेन यदि परिगणितै-रेव वासरैः सकलचापलदुर्ललितनरपतिचरणरणरणायमाननिगडां निर्गौडां न करोमि मेदिनीं ततस्तनूनपाति पीतसर्पिषि पतङ्ग इव पातकी पातयाम्यात्मानम्। इत्युक्त्वा च महासंधिविग्रहाधिकृतमवन्तिम-न्तिकस्थमादिदेश—'लिख्यताम्। आ रविरथचक्रचीत्कारचकितचार-णमिथुनमुक्तसानो रुदयाचलात्, आ त्रिकूटकटककुट्टाकटङ्कलिखितका-कुत्स्थलंकालुण्ठनव्यतिकरात्सुवेलात्, आ वारुणीमदस्खलितवरुण वरनारीनूपुररवमुखरकुहरकुञ्जेरस्तगिरेः, आ गुह्यकगेहिनीपरिमल-सुगन्धिगन्धपाषाणवासितगुहागृहाच्च गन्धमादनात्, सर्वेषां राज्ञां सज्जीक्रियन्तां कराः करदानाय शस्त्रग्रहणाय वा, गृह्यन्तां दिशश्चामराणि वा, शेखरीभवन्तु पादरजांसि शिरस्त्राणि वा, घटन्तामञ्जलयः करिघटाबन्धा वा, मुच्यन्तां भूमय इषवो

वा, समालम्ब्यन्तां वेत्रयष्टयः कुन्तयष्टयो वा, सुदृष्टः क्रियतामात्मा मच्चरणनखेषु कृपाणदर्पणेषु वा। परागतोऽहम्। पङ्गोरिव मे कुतो निवृत्तिस्तावद्यावन्न कृतः सर्वद्वीपान्तरसंचारी सकलनरपतिमुकुटमणिशिलाऽऽलोकमयः पादलेपः।' इति कृतनिश्चयश्च मुक्ताऽऽस्थानो विसर्जितराजलोकः स्नानारम्भाकाङ्क्षी सभामत्याक्षीत्। उत्थाय च स्वस्थवन्निःशेषमाह्निकमकार्षीत्। अगलच्च दर्पप्रसर इव श्रुतप्रतिज्ञस्य शाम्यदुष्मा दिवसस्त्रिभुवनस्य।

(षष्ठोच्छ्वासात्)



# कादम्बरी

## * परमात्म वन्दना *

रजोजुषे जन्मनि सत्त्ववृत्तये स्थितौ प्रजानां प्रलये तमःस्पृशे।
अजाय सर्गस्थितिनाशहेतवे त्रयीमयाय त्रिगुणात्मने नमः ॥ १ ॥

## * शंकरस्तुतिः *

जयन्ति बाणासुरमौलिलालिता दशास्यचूडामणिचक्रचुम्बिनः।
सुरासुराधीशशिखान्तशायिनो भवच्छिदस्त्र्यम्बकपादपांसवः ॥ २ ॥

## * विष्णुस्तुतिः *

जयत्युपेन्द्रः स चकार दूरतो बिभित्सया यः क्षणलब्धलक्ष्यया।
दृशैव कोपारुणया रिपोरुरः स्वयं भयाद्भिन्नमिवास्रपाटलम् ॥ ३ ॥

## * गुरुवन्दना *

नमामि भर्त्सोश्चरणाम्बुजद्वयं सशेखरैर्मौखरिभिः कृतार्चनम्।
समस्तसामन्तकिरीटवेदिकाविटङ्कपीठोल्लुठितारुणाङ्गुलि ॥ ४ ॥

## * दुर्जन निन्दा—सज्जन प्रशंसाच *

अकारणाविष्कृतवैरदारुणादसज्जनात्कस्य भयं न जायते ।
विषं महाहेरिव यस्य दुर्वचः सुदुःसहं संनिहितं सदा मुखे ॥ ५ ॥
कटु क्वणन्तो मलदायकाः खलास्तुदन्त्यलं बन्धनशृङ्खला इव ।
मनस्तु साधुध्वनिभिः पदे पदे हरन्ति सन्तो मणिनूपुरा इव ॥ ६ ॥
सुभाषितं हारि विशत्यधो गलान्न दुर्जनस्यार्करिपोरिवामृतम् ।
तदेवधत्ते हृदयेन सज्जनो हरिर्महारत्नमिवाति निर्मलम् ॥ ७ ॥

## * कथा प्रशंसा *

हरन्ति कं नोज्ज्वलदीपकोपमैर्नवैः पदार्थैरुपपादिताः कथाः ।
निरन्तरश्लेषघनाः सुजातयो महास्रजश्चम्पककुड्मलैरिव ॥ ८ ॥

## * कविवंश वर्णनम् *

बभूव वात्स्यायनवंशसंभवो द्विजो जगद्गीतगुणोऽग्रणीः सताम् ।
अनेकगुप्तार्चितपादपंकजः कुबेरनामांश इव स्वयंभुवः ॥ ६ ॥
उवास यस्य श्रुतिशान्तकल्मषे सदा पुरोडाशपवित्रिताधरे ।
सरस्वती सोमकषायितोदरे समस्तशास्त्रस्मृतिबन्धुरे मुखे ॥ १० ॥
जगुर्गृहेऽभ्यस्तसमस्तवाङ्मयैः ससारिकैः पञ्जरवर्तिभिः शुकैः ।
निगृह्यमाणा बटवः पदे पदे यजूंषि सामानि च यस्य शङ्किताः ॥ ११ ॥
हिरण्यगर्भो भुवनाण्डकादिव क्षपाकरः क्षीरमहार्णवादिव ।
अभूत्सुपर्णो विनतोदरादिव द्विजन्मनामर्थपतिः पतिस्ततः ॥ १२ ॥

विवृण्वतो यस्य विसारि वाङ्मयं दिने दिने शिष्यगणा नवा नवाः ।
उषःसु लग्नाः श्रवणेऽधिकां श्रियं प्रचक्रिरे चन्दनपल्लवा इव ॥ १३ ॥
विधानसंपादितदानशोभितैः स्फुरन्महावीरसनाथमूर्तिभिः ।
मखैरसंख्यैरजयत्सुरालयं सुखेन यो यूपकरैर्गजैरिव ॥ १४ ॥
स चित्रभानुं तनयं महात्मनां सुतोत्तमानां श्रुतिशास्त्रशालिनाम् ।
अवाप मध्ये स्फटिकोपलोपमं क्रमेण कैलासमिव क्षमाभृताम् ॥ १५ ॥
महात्मनो यस्य सुदूरनिर्गताः कलङ्कमुक्तेन्दुकलामलत्विषः ।
द्विषन्मनः प्राविविशुः कृतान्तरा गुणा नृसिंहस्य नखाङ्कुरा इव ॥ १६ ॥
दिशामलीकालकभङ्गतां गतस्त्रयीवधूकर्णतमालपल्लवः ।
चकार यस्याध्वरधूमसंचयो मलीमसः शुक्लतरं निजं यशः ॥ १७ ॥
सरस्वतीपाणिसरोजसंपुटप्रसुप्तहोमश्रमशीकराम्भसः ।
यशोंऽशुशुक्लीकृतसप्तविष्टपात्ततः सुतो बाण इति व्यजायत ॥ १८ ॥
द्विजेनतेनाक्षतकण्ठकौण्ठयया महामनोमोहमलीमसान्धया ।
अलब्धवैदग्ध्यविलासमुग्धया धिया निबद्धेयमतिद्वयी कथा ॥ १९ ॥

## * शूद्रकवर्णनम् *

'आसीदशेषनरपतिशिरःसमभ्यर्चितशासनः पाकशासन इवापरः, चतुरुदधिमालामेखलाया भुवो भर्ता, प्रतापानुरागावनतसमस्तसामन्तचक्रः, चक्रवर्तिलक्षणोपेतः, चक्रधर इव करकमलोपलक्ष्यमाणशङ्खचक्रलाञ्छनः, हर इव जितमन्मथः, गुह इवाप्रतिहतशक्तिः, कमलयोनिरिव विमानीकृतराजहंसमण्डलः, जलधिरिव लक्ष्मीप्रसूतिः, गङ्गाप्रवाह इव भगीरथपथप्रवृत्तः, रविरिव प्रतिदिवसोपजायमानोदयः मेरुरिव सकलोपजीव्यमानपादच्छायः, दिग्गज इवानवरतप्रवृत्तदानार्द्रीकृतकरः, कर्ता महाश्चर्याणाम्, आगमः काव्यामृतरसानाम्, उदयशैलो मित्रमण्डलस्य, उत्पातकेतुरहित-

जनस्य, प्रवर्तयिता गोष्ठीबन्धानाम्, आश्रयो रसिकानाम्, प्रत्यादेशो धनुष्मताम्, धौरेयः साहसिकानाम्, अग्रणीर्विदग्धानाम्, वैनतेय इव चापकोटिसमुत्सारितारातिकुलाचलो राजा शूद्रको नाम।

नाम्नैव यो निर्भिन्नारातिहृदयो विरचितनारसिंहरूपाडम्बरम्, एकविक्रमाक्रान्तसकलभुवनतलो विक्रमत्रयायासितभुवनत्रयं च हसति स्मेव वासुदेवम्। अतिचिरकाललग्नमतिक्रान्तकुनृपतिसहस्रसंपर्ककलङ्कमिव क्षालयन्ती यस्य कृपाणधाराजले चिरमुवास लक्ष्मीः। यश्च मनसि धर्मेण, कोपे यमेन, प्रसादे धनदेन, प्रतापे वह्निना, भुजे भुवा, दृशि श्रिया, वाचि सरस्वत्या, मुखे शशिना, बले मरुता, प्रज्ञायां सुरगुरुणा, रूपे मनसिजेन, तेजसि सवित्रा च वसता सर्वदेवमयस्य प्रकटितविश्वरूपाकृतेरनुकरोति भगवतो नारायणस्य।

यस्य च मदकलकरिकुम्भपीठपाटनं विदधतो लग्नस्थूलमुक्ताफलेन, दृढमुष्टिनिपीडनान्निष्ठ्यूतधाराजलबिन्दुदन्तुरेणेव, कृपाणेनाकृष्यमाणा समीपं सकृदगाद्राजलक्ष्मीः। यस्य च हृदिस्थितानपि भर्तॄन्दिधक्षुरिव प्रतापानलो वियोगिनीनामपि रिपुसुन्दरीणामन्तर्जनितदाहो दिवानिशं जज्वाल। यस्मिंश्च राजनि जितजगति पालयति महीं चित्रकर्मसु वर्णसंकराः, काव्येषु दृढबन्धाः, शास्त्रेषु चिन्ताः, स्वप्नेषु विप्रलम्भाः, ध्वजेषु प्रकम्पाः, गीतेषु रागविलसितानि, करिषु मदविकाराः, चापेषु गुणच्छेदाः, गवाक्षेषु जालमार्गाः, शशिकृपाणकवचेषु कलङ्काः, सार्यक्षेतु शून्यगृहा न प्रजानामासन्। यस्य च परलोकाद्भयम्, अन्तःपुरिकाकुन्तलेषु भङ्गः, नूपुरेषु मुखरता, विवाहेषु करग्रहणम्, अनवरतमखाग्निधूमेनाश्रुपातः, तुरङ्गेषु कशाभिघातोभूत्।

तस्य च राज्ञः कलिकालभयपुञ्जीभूतकृतयुगानुकारिणी, त्रिभुवनप्रसवभूमिरिव विस्तीर्णा, जलावगाहनागतजयकुञ्जरकुम्भसिन्दूरसंध्यायमानसलिलया, उन्मदकलहंसकुलकोलाहलमुखरीकृतकूलया, वेत्रवत्या परिगता विदिशाभिधाना नगरी राजधान्यासीत् ।

स तस्यामवजिताशेषभुवनमण्डलतया विगतराज्यचिन्ताभारनिर्वृतः, द्वीपान्तरागतानेकभूमिपालमौलिमालालालितचरणयुगलो वलयमिव लीलया भुजेन भुवनभारमुद्वहन्, अमरगुरुमपि प्रज्ञयोपहसद्भिरनेककुलक्रमागतैरसकृदालोचितनीतिशास्त्रनिर्मलमनोभिरलुब्धैः स्निग्धैः प्रबुद्धैश्चामात्यैः परिवृतः समानवयोविद्यालंकारैरनेकमूर्धाभिषिक्तपार्थिवकुलोद्गतैरखिलकलाकलापालोचनकठोरमतिभिरतिप्रगल्भैः कालविद्भिः प्रभावानुरक्तहृदयैः, अग्राम्योपहासकुशलैः, इङ्गिताकारवेदिभिः, काव्यनाटकाऽऽख्यानकाऽऽख्यायिकालेख्यव्याख्यानादिक्रियानिपुणैः, अतिकठिनपीवरस्कन्धोरुबाहुभिः, असकृदवदलितसमदरिपुगजघटापीठबन्धैः, केसरिकिशोरकैरिव विक्रमैकरसैरपि विनयव्यवहारिभिः, आत्मनः प्रतिबिम्बैरिव राजपुत्रैः सह रममाणः प्रथमे वयसि सुखमतिचिरमुवास । स कदाचिदनवरतदोलायमानरत्नवलयो, घर्घरिकास्फालनप्रकम्पकणत्कणायमानमणिकर्णपूरः, स्वयमारब्धमृदङ्गवाद्यः, संगीतकप्रसङ्गेन; कदाचिदविरलविमुक्तशरासारशून्यीकृतकाननो मृगयाव्यापारेण, कदाचिदाबद्धविदग्धमण्डलः काव्यप्रबन्धरचनेन, कदाचिच्छास्त्रालापेन, कदाचिद्दर्शनागतमुनिजनचरणशुश्रूषया, कदाचिदक्षरच्युतकमात्राच्युतकबिन्दुमतीगूढचतुर्थपादप्रहेलिकाप्रदानादिभिः सुहृत्परिवृतो दिवसमनैषीत् । यथैव च दिवसमेवमारब्धविविधक्रीडापरिहासचतुरैः सुहृद्भिरुपेतो निशामनैषीत् ।

## ※ चाण्डाल कन्याऽऽगमनम् ※

एकदा तु नातिदूरोदिते, नवनलिनदलसंपुटभिदि, किञ्चिदुन्मुक्तपाटलिम्नि, भगवति सहस्रमरीचिमालिनि राजानमास्थानमण्डपगतमङ्गनाजनविरुद्धेन, वामपार्श्वावलम्बिना, कौक्षेयकेण संनिहितविषधरेव चन्दनलता भीषणरमणीयाकृतिः, चूडामणिप्रतिबिम्बच्छलेन राजाज्ञेव मूर्तिमती राजभिः शिरोभिरुह्यमाना, शरदिव कलहंसधवलाम्बरा, जामदग्न्यपरशुधारेव वशीकृतसकलराजमण्डला, विन्ध्यवनभूमिरिव वेत्रलतावती, राज्याधिदेवतेव विग्रहिणी प्रतीहारी समुपसृत्य क्षितितलनिहितजानुकरकमला सविनयमब्रवीत्—देव, द्वारस्थिता सुरलोकमारोहतस्त्रिशङ्कोरिव कुपितशतमखहुंकारनिपातिता राजलक्ष्मीर्दक्षिणापथादागता चाण्डालकन्यका पञ्जरस्थं शुकमादाय देवं विज्ञपति—'सकलभुवनतलरत्नानामुदधिरिवैकभाजनं देवः। विहंगमश्चायमाश्चर्यभूतो निखिलभुवनतलरत्नमिति कृत्वा देवपादमूलमादायागताहमिच्छामि देवदर्शनसुखमनुभवितुम्' इति। एतदाकर्ण्य 'देवः प्रमाणम्' इत्युक्त्वा विरराम। उपजातकुतूहलस्तु राजा समीपवर्तिनां राज्ञामालोक्य मुखानि 'को दोषः प्रवेश्यताम्' इत्यादिदेश।

## ※ चाण्डालकन्याया राजदर्शनम् ※

अथ प्रतीहारी नरपतिकथनानन्तरमुत्थाय तां मातङ्गकुमारीं प्रावेशयत्। प्रविश्य च सा नरपतिसहस्रमध्यवर्तिनमशनिभयपुञ्जितकुलशैलमध्यगतमिव कनकशिखरिणम्, अनेकरत्नाभरणकिरणजालकान्तरितावयवमिन्द्रायुधसहस्रसंछादिताष्टदिग्भागमिव जलधरदिवसम्, अवलम्बितस्थूलमुक्ताकलापस्य कनकशृङ्खलानियमितमणिद-

शिडकाचतुष्टयस्य गगनासधुफेनपटलपाण्डुरस्य नातिमहतो दुकूल-वितानस्याधस्तादिन्दुकान्तपर्यङ्किकानिषण्णम्, उद्धूयमानसुवर्णद-ण्डचामरकलापम्, उन्मयूखमुखकान्तिविजयपराभवप्रणते शशिनीव स्फटिकपादपीठे विन्यस्तवामपादम्, इन्द्रनीलमणिकुट्टिमप्रभासंपर्क-श्यामायमानैः प्रणतरिपुनिःश्वासमलिनीकृतैरिव चरणनखमयूखजालै-रुपशोभमानम्, आसनोल्लसितपद्मरागकिरणपाटलीकृतेनाचिरमृदित-मधुकैटभरुधिरारुणेन हरिमिवोरुयुगलेन विराजमानम्, अमृतफेन-धवले गोरोचनालिखितहंसमिथुनसनाथपर्यन्ते चारुचामरवायुप्रनर्ति-तान्तदेशे दुकूले वसानम्, अतिसुरभिचन्दनानुलेपनधवलितोरःस्थलम्, उपरिविन्यस्तकुङ्कुमस्थासकम्, अन्तरान्तरानिपतितबालातपच्छेदमिवकै-लासशिखरिणम्, अपरशशिशङ्कया नक्षत्रमालयेव हारलतया कृतमुख-परिवेषम्, अतिचपलराज्यलक्ष्मीबन्धनिगडकटकशङ्कामुपजनयतेन्द्रमणि-केयूरयुग्मेन मलयजरसगन्धलुब्धेन भुजङ्गद्वयेनेव वेष्टितबाहुयुगलम्, ईषदालम्बितकर्णोत्पलम्, उन्नतघोणम्, उत्फुल्लपुण्डरीकनेत्रम्, अम-लकलधौतपट्टायतमष्टमीचन्द्रशकलाकारमशेषभुवनराज्याभिषेकपूत-मूर्णासनाथं ललाटदेशमुद्वहन्तम्, आमोदिमालतीकुसुमशेखरमुषसि शिखरपर्यस्ततारकापुञ्जमिव पश्चिमाचलम्, आभरणप्रभापिशङ्गिता-ङ्गतया लग्नहरहुताशमिव मकरध्वजम्, अमलमणिकुट्टिमसंक्रान्त-सकलदेहप्रतिबिम्बतया पतिप्रेम्णा वसुंधरया हृदयेनेवोह्यमानम्, अपरिमितपरिवारजनमप्यद्वितीयम्, अनन्तगजतुरगसाधनमपि खड्ग-मात्रसहायम्, एकदेशस्थितमपि व्याप्तभुवनमण्डलम्, आसने स्थित-मपि धनुषि निषण्णम्, उत्सादितद्विषदिन्धनमपि ज्वलत्प्रतापानलम्, आयतलोचनमपि सूक्ष्मदर्शनम्, महादोषमपि सकलगुणाधिष्ठानम्, अविरतप्रवृत्तदानमप्यमदम्, अत्यन्तशुद्धस्वभावमपि कृष्णचरितम्, अकरमपि हस्तस्थितभुवनतलं राजानमद्राक्षीत्।

आलोक्य च सा दूरस्थितैव प्रचलितरत्नवलयेन रक्तकुवलयदल-कोमलेन पाणिना जर्जरितमुखभागां वेणुलतामादाय नरपतिप्रतिबोधनार्थं सकृत्सभाकुट्टिममाजघान, येन सकलमेवतद्राजकमेकपदे घनकरियूथमिव तालशब्देन युगपदावलितवदनमवनिपालमुखादाकृष्य चक्षुस्तदभिमुखमासीत् ।

## * चाण्डालकन्यावर्णनम् *

अवनिपतिस्तु 'दूरादालोकय' इत्यभिधाय प्रतीहार्या निर्दिश्यमानां तां वयःपरिणामशुभ्रशिरसा रक्तराजीवनेत्रापाङ्गेनानवरतकृतव्यायामतया यौवनापगमेऽप्यशिथिलशरीरसंधिना सत्यपि मातङ्गत्वे नातिनृशंसाकृतिनानुगृहीतार्यवेषेण शुभ्रवाससा पुरुषेणाधिष्ठितपुरोभागाम्, आकुलाकुलकाकपक्षधारिणा कनकशलाकानिर्मितमप्यन्तर्गतशुकप्रभाश्यामायमानं मरकतमयमिव पञ्जरमुद्वहता चाण्डालदारकेणानुगम्यमानाम्, असुरगृहीतामृतापहरणकृतकपटपटुविलासिनीवेषस्य श्यामतया भगवतो हरेरिवानुकुर्वतीम्, संचारिणीमिवेन्द्रनीलमणिपुत्रिकाम्, गुल्फावलम्बिनीलकञ्चुकेनावच्छन्नशरीराम्, उपरि-रक्तांशुकरचितावगुण्ठनाम्, नीलोत्पलस्थलीमिव निपतितसंध्यातपाम्, एककर्णावसक्तदन्तपत्रप्रभाधवलितकपोलमण्डलाम्, उद्यदिन्दुकिरणच्छुरितमुखीमिव विभावरीम्, उरःस्थलनिवाससंक्रान्तनारायणदेहप्रभाश्यामलितामिव श्रियम्, कुपितहरहुताशनदह्यमानमदनधूममलिनीकृतामिव रतिम्, उन्मदहलिहलाकर्षणभयपलायितामिव कालिन्दीम्, अतिबहलपिण्डालक्तकरसरागपल्लवितपादपङ्कजामचिरमृदितमहिषासुररुधिररक्तचरणामिव कात्यायनीम्, आलोहिताङ्गुलिप्रभापाटलितनखमयूखाम्, अतिकठिनमणिकुट्टिमस्पर्शमसहमानाम्, क्षितितले

पल्लवभङ्गानिव निधाय संचरन्तीम्, अतिस्थूलमुक्ताफलघटितेन शुचिना हारेण गङ्गास्रोतसेव कालिन्दीशङ्कया कृतकण्ठग्रहाम्, शरद-मिव विकसितपुण्डरीकलोचनाम्, प्रावृषमिव घनकेशजालाम्, मलय-मेखलामिव चन्दनपल्लवावतंसाम्, नक्षत्रमालामिव चित्रश्रवणाभर-णभूषिताम्, श्रियमिव हस्तस्थितकमलशोभाम्, मूर्च्छामिव मनोहा-रिणीम्, अरण्यभूमिमिव रूपसंपन्नाम्, दिव्ययोषितमिवाकुलीनाम्, निद्रामिव लोचनग्राहिणीम्, अरण्यकमलिनीमिव मातङ्गकुलदूषिताम्, अमूर्तामिव स्पर्शवर्जिताम्, मधुमासकुसुमसमृद्धिमिवाजातिम्, यक्षाधिपलक्ष्मीमिवालकोद्भासिनीम्, अचिरोपारूढयौवनाम्, अति-शयरूपाकृतिमनिमिषलोचनो ददर्श।

## * वैशम्पायन परिचयः *

राजानमीषदवगलितकर्णपल्लवावतंसा प्रगल्भवनितेव कन्यका प्रणनाम। कृतप्रणामायां च तस्यां मणिकुट्टिमोपविष्टायां स पुरुषस्तं विहङ्गमं शुकमादाय पञ्जरगतमेव किञ्चिदुपसृत्य राज्ञे न्यवेदयत्। अब्रवीच्च—'देव' विदितसकलशास्त्रार्थः, राजनीतिप्रयोगकुशलः, पुराणेतिहासकथालापनिपुणः, वेदिता गीतश्रुतीनां, काव्यनाटका-ख्यायिकाख्यानकप्रभृतीनामपरिमितानां सुभाषितानामध्येता स्वयं च कर्ता, परिहासालापपेशलः, वीणावेणुमुरजादीनामसमः श्रोता, नृत्यप्रयोगदर्शननिपुणः, चित्रकर्मणि प्रवीणः, द्यूतव्यापारे प्रगल्भः, सकलभूतलरत्नभूतोऽयं वैशम्पायनो नाम शुकः सर्वरत्नानामुदधिरिव देवो भाजनमितिकृत्वैनमादायास्मत्स्वामिदुहिता देवपादमूलमायाता। तदयमात्मीयः क्रियताम्' इत्युक्त्वा नरपतेः पुरो निधाय पञ्जरमसा-वपससार।

अपसृते च तस्मिन्स विहङ्गराजो राजाभिमुखो भूत्वोन्नमय्य दक्षिणं चरणमतिस्पष्टवर्णस्वरसंस्कारया गिरा कृतजयशब्दो राजानमुद्दिश्यार्यामिमां पपाठ—

'स्तनयुगमश्रुस्नातं समीपतरवर्ति हृदयशोकाग्नेः।
चरति विमुक्ताहारं व्रतमिव भवतो रिपुस्त्रीणाम्॥

## * शुकविषये राज्ञः सचिवंप्रति प्रश्नः *

राजा तु तामार्यां श्रुत्वा संजातविस्मयः सहर्षमासन्नवर्तिनम्, अतिमहार्घहेमासनोपविष्टम्, अमरगुरुमिवाशेषनीतिशास्त्रपारगम्, अतिवयसम्, अग्रजन्मानम्, अखिले मन्त्रिमण्डले प्रधानममात्यं कुमारपालितनामानमब्रवीत्—'श्रुता भवद्भिरस्य विहङ्गमस्य स्पष्टता वर्णोच्चारणे, स्वरे च मधुरता। प्रथमं तावदिदमेव महदाश्चर्यम्, यदयमसंकीर्णवर्णप्रविभागामभिव्यक्तमात्रानुस्वारसंस्कारयोगां विशेषसंयुक्तां गिरमुदीरयति। तत्र पुनरपरमभिमतविषये तिरश्चोऽपि मनुजस्येव संस्कारवतो बुद्धिपूर्वा प्रवृत्तिः। तथा हि। अनेन समुत्क्षिप्तदक्षिणचरणेनोच्चार्य जयशब्दमियमार्या मामुद्दिश्य परिस्फुटाक्षरं गीता। प्रायेण हि पक्षिणः पशवश्च भयाहारमैथुननिद्रासंज्ञामात्रवेदिनो भवन्ति। इदं तु महच्चित्रम्'

## * सचिव स्योत्तरम् *

इत्युक्तवति भूभुजि कुमारपालितः किंचित्स्मितवदनोऽवादीत्—'किमत्र चित्रम्। एते हि शुकसारिकाप्रभृतयो विहङ्गविशेषा यथाश्रुतां वाचमुच्चारयन्तीत्यधिगतमेव देवेन। तत्राप्यन्यजन्मोपात्तसंस्कारानुबन्धेन वा पुरुषप्रयत्नेन वा

संस्कारातिशय उपजायत इति नातिचित्रम् । अन्यत्-एतेषामपि पुरा पुरुषाणामिवातिपरिस्फुटाभिधाना वागासीत् । अग्निशापात्त्वस्कुटालापता शुकानामुपजाता, करिणां च जिह्वापरिवृत्तिः' इति । एवमुच्चारयत्येव तस्मिन्नशिशिरकिरणमम्बरतलस्य मध्यमध्यारूढमावेदयन्नाडिकाच्छेदप्रहतपटुपटहनादानुसारी मध्यान्हशङ्खध्वनिरुदतिष्ठत् । तमाकर्ण्य च समासन्नस्नानसमयो विसर्जितराजलोकः क्षितिपतिरास्थानमण्डपादुत्तस्थौ ।

## * राजसमाजविसर्जनवर्णनम् *

अथ चलति महीपतावन्योन्यमतिरभससंचलनचालिताङ्गदपत्रभङ्गमकरकोटिपाटितांशुकपटानाम्, आक्षेपदोलायमानकण्ठदाम्नाम्, अर्धावलम्बिभिः कर्णोत्पलैश्चुम्ब्यमानगण्डस्थलानाम्, गमनप्रणामलालसानामहमहमिकया वक्षःस्थलप्रेङ्खोलितहारलतानाम्, उत्तिष्ठतामासीत्संभ्रमो महीपतीनाम् । सरभसप्रचलितसामन्तशतचरणतलाभिहतस्य चास्थानमण्डपस्य-निर्घोषगम्भीरेण कम्पयतेव वसुमतीम्, प्रतिहारिणां च पुरःससंभ्रमसमुत्सारितजनानां दण्डिनां समारब्धहेलमुच्चैरुच्चरतामालोकयन्त्विति तारतरदीर्घेण, भवनप्रासादकुञ्जेषूच्चरितप्रतिच्छन्दतया दीर्घतामुपगतेनालोकशब्देन राज्ञां च ससंभ्रमावर्जितमौलिलोलचूडामणीनां प्रणमतां मलनणिशलाकादन्तुराभिः किरीटकोटिभिरुल्लिख्यमानस्य मणिकुट्टिमस्य निःस्वनेन, प्रणामपर्यस्तानामतिकठिनमणिकुट्टिमनिपतितरणरणायितानां च मणिकर्णपूराणां निनादेन, मङ्गलपाठकानां च पुरोयायिनां च जयजीवेति मधुरवचनानुयातेन पठतां दिगन्तव्यापिना कलकलेन, संक्षोभादतित्वरितपदप्रवृत्तैरवनिपतिभिः केयूरकोटिता-

डितानां क्वणितमुखररत्नदाम्नां च मणिस्तम्भानां रणितेन सर्वतः क्षुभितमिव तदास्थानभवनमभवत् ।

## ॥ नरपतेरन्तःपुरगमनं स्नानं च ॥

अथ विसर्जितराजलोको 'विश्रम्यताम्' इति स्वयमेवाभिधाय तां चाण्डालकन्यकां, "वैशम्पायनः प्रवेश्यतामभ्यन्तरम्" इति ताम्बूलकरङ्कवाहिनीमादिश्य, कतिपयाप्तराजपुत्रपरिवृतो नरपतिरभ्यन्तरं प्राविशत् । अपनीताभरणश्च दिवसकर इव विगलितकिरणजालः, चन्द्रतारकासमूहशून्य इव गगनाभोगः समुपाहृतसमुचितव्यायामोपकरणां व्यायामभूमिमयासीत् । स तस्यां च समानवयोभिः सह राजपुत्रैः कृतमधुरव्यायामः, दण्डिभिरुपदिश्यमानमार्गः, विततसितवितानाम्, अनेकचारणगणनिबध्यमानमण्डलाम्, गन्धोदकपूर्णकनकमयजलद्रोणीसनाथमध्याम्, उपस्थापितस्फाटिकस्नानपीठाम्, एकान्तनिहितैः, अतिसुरभिगन्धसलिलपूर्णैः परिमलावकृष्टमधुकरकुलान्धकारितमुखैः आतपभयान्नीलकर्पटावगुण्ठितमुखैरिव स्नानकलशैरुपशोभितां स्नानभूमिमगच्छत् । अवतीर्णस्य जलद्रोणीं परिचारिकाकरमृदितसुगन्ध्यामलकलिप्तशिरसो राज्ञः परितः समुपतस्थुरंशुकनिबिडनिबद्धपरिकराः, दूरसमुत्सारितवलयबाहुलताः, समुत्क्षिप्तकर्णाभरणाः, कर्णोत्सङ्गोत्सारितालकाः, गृहीतजलकलशाः, स्नानार्थमभिषेकदेवता इव वारयोषितः । द्रोणीसलिलादुत्थाय च स्नानपीठममलस्फाटिकधवलं वरुण इव राजहंसमारुरोह । ततस्ताः काश्चिन्मरकतकलशप्रभाश्यामायमाना नलिन्य इव मूर्तिमत्यः पत्रपुटैः, काश्चिद्रजतकलशहस्ता रजन्य इव पूर्णचन्द्रमण्डलविनिर्गतेन ज्योत्स्नाप्रवाहेण, काश्चित्कलशोत्क्षेपश्रमस्वेदा-

र्द्रशरीरा जलदेवता इव स्फाटिकैः कलशैस्तीर्थजलेन, काश्चिन्मलयसरित इव चन्दनरसमिश्रेण सलिलेन, काश्चिदुत्क्षिप्तकलशपार्श्वविन्यस्तहस्तपल्लवाः प्रकीर्यमाणनखमयूखजालकाः प्रत्यङ्गुलिविवरविनिर्गतजलधाराः सलिलयन्त्रदेवता इव, काश्चिज्जाड्यमपनेतुं दिवसश्रिय इव कनककलशहस्ताः कुङ्कुमजलेन वाराङ्गना यथायथं राजानमभिषिषिचुः। अनन्तरमुदपादि च स्फोटयन्निव श्रुतिपथमनेकप्रहतपटुपटहझल्लरीमृदङ्गवेणुवीणागीतनिनादानुगम्यमानो बन्दिवृन्दकोलाहलाकुलो भुवनविवरव्यापी स्नानशङ्खानामापूर्यमाणानामतिमुखरो ध्वनिः।

## "देवपूजन भोजने विश्रामश्च"

एवं च क्रमेण निर्वर्तिताभिषेको विषधरनिर्मोकपरिलघुनी धवले परिधाय धौतवाससी शरदम्बरैकदेश इव जलक्षालननिर्मलतनुः, अतिधवलजलधरच्छेदशुचिना दुकूलपटपल्लवेन तुहिनगिरिरिव गगनसरित्स्रोतसा कृतशिरोवेष्टनः, संपादितपितृजलक्रियो मन्त्रपूतेन तोयाञ्जलिना दिवसकरमभि प्रणम्य देवगृहमगमत्। उपरचितपशुपतिपूजश्च निष्क्रम्य देवगृहान्निर्वर्तिताग्निकार्यो विलेपनभूमौ भृङ्गारिभिरलिकदम्बकैरनुबध्यमानपरिमलेन मृगमदकर्पूरकुङ्कुमवाससुरभिणा चन्दनेनानुलिप्तसर्वाङ्गो विरचितामोदिमालतीकुसुमशेखरः कृतवस्त्रपरिवर्तो रत्नकर्णपूरमात्राभरणः समुचितभोजनैः सह भूपतिभिराहारमभिमतरसास्वादजातप्रीतिरवनिपो निर्वर्तयामास।

परिपीतधूमवर्तिरुपस्पृश्य च गृहीतताम्बूलस्तस्मात्प्रमृष्टमणिकुट्टिमप्रदेशादुत्थाय नातिदूरवर्तिन्या ससंभ्रमप्रधावितया प्रतीहार्या प्रसारितबाहुमवलम्ब्य वेत्रलताग्रहणप्रसङ्गादतिजरठकिसलयानुकारिक-

र्तलकरेणाऽभ्यन्तरसंचारसमुचितेन परिजनेनानुगम्यमानो, धवलां-
शुकपरिगतपर्यन्ततया स्फटिकमणिमयभित्तिनिबद्धमिवोपलक्ष्यमा-
णम्, अतिसुरभिणा मृगनाभिपरिगतेनामोदिना चन्दनवारिणा सि-
क्तशिशिरमणिभूमिम्, अविरलविप्रकीर्णेन विमलमणिकुट्टिमगगनत-
लतारागणेनेव कुसुमोपहारेण निरन्तरनिचितम्, उत्कीर्णशाल-
भञ्जिकानिवहेन संनिहितगृहदेवतेनेव गन्धसलिलक्षालितेन कलधौ-
तमयेन स्तम्भसंचयेन विराजमानम्, अतिबहलाऽगरुधूपपरिमलम्,
अखिलविगलितजलनिवहधवलजलधरशकलानुकारिणा कुसुमामोद-
वासितप्रच्छदपटेन पट्टोपधानाध्यासितशिरोभागेन मणिमयप्रतिपादुका-
प्रतिष्ठितपादेन पार्श्वस्थरत्नपादपीठेन तुहिनशिलातलसदृशशयनेन स-
नाथीकृतवेदिकं भुक्त्वाऽऽस्थानमण्डपमयासीत्। तत्र च शयने निष-
ण्णः क्षितितलोपविष्टया शनैः शनैरुत्सङ्गनिहितासिलतया खड्ग-
वाहिन्या नवनलिनदलकोमलेन करसंपुटेन संवाह्यमानचरणस्तत्का-
लोचितदर्शनैरवनिपतिभिरमात्यैर्मित्रैश्च सह तास्ताः कथाः कुर्व-
न्मुहूर्तमिवाऽऽसांचक्रे। ततो नातिदूरवर्तिनीम् 'अन्तःपुराद्वैशम्पाय-
नमादायागच्छ' इति समुपजाततद्वृत्तान्तप्रश्नकुतूहलो राजा प्रती-
हारीमादिदेश। सा क्षितितलनिहितजानुकरतला 'यथाज्ञापयति देवः'
इति शिरसि कृत्वाज्ञां यथादिष्टमकरोत्।

## "वैशम्पायनस्याऽऽनयनम् तेन सह राज्ञो वार्त्तालापश्च"

अथ मुहूर्तादिव वैशम्पायनः प्रतीहार्या गृहीतपञ्जरः कनकवेत्रल-
तावलम्बिना किंचिदवनतपूर्वकायेन सितकञ्चुकावच्छन्नवपुषा जराध-
वलितमौलिना गद्गदस्वरेण मन्दमन्दसंचारिणा विहङ्गजातिप्रीत्या-
जरत्कलहंसेनेव कञ्चुकिनानुगम्यमानो राजान्तिकमाजगाम। क्षितित-

लनिहितकरतलस्तु कञ्चुकी राजानं व्यज्ञापयत्-'देव, देव्यो विज्ञापयन्ति, 'देवाऽऽदेशाद्वैशम्पायनः स्नातः कृताहारश्च देवपादमूलं प्रतीहार्यानीतः' इत्यभिधाय गते च तस्मिन्राजा वैशम्पायनमपृच्छत्—'कच्चिदभिमतं मास्वादितमभ्यन्तरे भवता किञ्चिदशनं जातम्' इति। स प्रत्युवाच-'देव' किं वा नास्वादितम्, आमत्तकोकिललोचनच्छविनीलपाटलः कषायमधुरः प्रकाममापीतो जम्बूफलरसः, हरिनखरभिन्नमत्तमातङ्गकुम्भमुक्तार्द्रमुक्ताफलत्विषि खण्डितानि दाडिमबीजानि, नलिनीदलहरिन्ति द्राक्षाफलस्वादूनि च चूर्णितानि स्वेच्छया प्राचीनामलकीफलानि। किं वा प्रलपितेन बहुना। सर्वमेव देवीभिः स्वयं करतलोपनीयमानममृतायते' इति। एवंवादिनो वचनमाक्षिप्य नरपतिरब्रवीत्—'आस्तां तावत्सर्वम्। अपनयतु नः कुतूहलम्। आवेदयतु भवानादितः प्रभृति कात्स्न्येनात्मनो जन्म कस्मिन्देशे, भवान्कथं जातः, केन वा नाम कृतम्, का ते माता, कस्ते पिता, कथं वेदानामागमः, कथं शास्त्राणां परिचयः, कुतः कला आसादिताः, किंहेतुकं जन्मान्तरानुस्मरणम्, अथवा विहङ्गवेषधारी कश्चिच्छन्नं निवससि, क्व वा पूर्वमुषितम्, कियद्वा वयः, कथं पञ्जरबन्धनं, कथं चाण्डालहस्तगमनम्, इह वा कथमागमनम्' इति। वैशम्पायनस्तु स्वयमुपजातकुतूहलेन सबहुमानमवनिपतिना पृष्टो मुहूर्तमिव ध्यात्वा सादरमब्रवीत्—'देव' महतीयं कथा। यदि कौतुकमाकर्ण्यताम्—

## "वैशम्पायनकृतं विन्ध्याटवी वर्णनम्"

अस्ति पूर्वापरजलनिधिवेलावनलग्ना, मध्यदेशालंकारभूता मेखलेव भुवः, वनकरिकुलमदजलसेकसंवर्धितैरतिविकचधवलकुसुमनिकरमत्युच्चतया तारकागणमिव शिखरप्रदेशसंलग्नमुद्वहद्भिः

यादपैरुपशोभिता, मदकलकुररकुलदृश्यमानमरिचपल्लवा, करिकल-भकरमृदिततमालकिसलयामोदिनी, पथिकजनरचितलवङ्गपल्लवसंस्तरैरतिकठोरनालिकेरकेतकीकरीरबकुलपरिगतप्रान्तैः, ताम्बूलीलतावनद्धपूगखण्डमण्डितैर्वनलक्ष्मीवासभुवनैरिव विराजिता लतामण्डपैः,उन्मदमातङ्गकपोलस्थलगलितसलिलसिक्तेनेवाऽनवरतमेलालतावनेन मदगन्धिनान्धकारिता, नखमुखलग्नेभकुम्भमुक्तफललुब्धैः शबर-सेनापतिभिरभिहन्यमानकेसरिशता, प्रेताधिपनगरीव सदासंनिहित-मृत्युभीषणा महिषाधिष्ठिता च समरोद्यतपताकिनीव बाणसमारो-पितशिलीमुखा विमुक्तसिंहनादा च, कात्यायनीव प्रचलितखड्गभी-षणा रक्तचन्दनालंकृता च, कर्णीसुतकथेव संनिहितविपुलाचला शशोपगता च, कल्पान्तप्रदोषसंध्येव प्रनृत्तनीलकण्ठा पल्लवारुणा च, अमृतमथनवेलेव श्रीद्रुमोपशोभिता वारुणपरिगता च, प्रावृडिव घनश्यामलाऽनेकशतह्रदालंकृता च, चन्द्रमूर्त्तिरिव सततमृक्षसार्थानु-गता हरिणाध्यासिता च, राज्यस्थितिरिव चमरमृगबालव्यजनो-पशोभिता समदगजघटापरिपालिता च, गिरितनयेव स्थाणुसंगता मृगपतिसेविता च, जानकीव प्रसूतकुशलवा निशाचरपरिगृहीता च, बालग्रीवेव व्याघ्रनखपंक्तिमण्डिता गण्डकाभरणा च, क्वचित्प्रलयवेलेव महावराहदंष्ट्रासमुत्खातधरणिमण्डला, क्वचिद्दशमुखनगरीव चटुल-वानरवृन्दभज्यमानतुङ्गशालाकुला, क्वचिदचिरनिर्वृत्तविवाहभूमि-रिव हरितकुशसमित्कुसुमशमीपलाशशोभिता,क्वचिदुद्धृत्तमृगपतिनाद-भीतेव कण्टकिता, क्वचिन्मत्तेव कोकिलकुलप्रलापिनी, क्वचिदुन्मत्तेव वायुवेगकृततालशब्दा, क्वचिद्विधवेवोन्मुक्ततालपत्रा, क्वचित्समर-भूमिरिव शरशतनिचिता, क्वचिदमरपतितनुरिव नेत्रसहस्रसंकुला, क्वचिन्नारायणमूर्तिरिव तमालनीला, क्वचित्पार्थरथपताकेव कप्या-क्रान्ता, क्वचिदवनिपतिद्वारभूमिरिव वेत्रलताशतदुःप्रवेशा, क्वचि-

द्विराटनगरीव कीचकशताकुला, क्वचिदम्बरश्रीरिव व्याधानुगम्यमानतरलतारकमृगा, कचिद्गृहीतव्रतेव दर्भचीरजटावल्कलधारिणी, अपरिमितबहलपत्रसंचयापि सप्तपर्णोपशोभिता, क्रूरसत्त्वापि मुनिजनसेविता पुष्पवत्यपि पवित्रा विन्ध्याटवी नाम।

## "अगस्त्याऽऽश्रमवर्णनम्"

तस्यां च दण्डकाऽरण्यान्तःपाति, सकलभुवनविख्यातम्, उत्पत्तिक्षेत्रमिव भगवतो धर्मस्य, सुरपतिप्रार्थनापीतसकलसागरजलस्य, मेरुमत्सराद्गगनतलप्रसारितविकटशिरःसहस्रेण, दिवसकररथगमनपथमपनेतुमभ्युद्यतेन,अवगणितसकलसुरवचसा विन्ध्यगिरिणाप्यनुल्लङ्घिताज्ञस्य, जठरानलजीर्णवातापिदानवस्य, सुरासुरमुकुटमकरपत्रकोटिचुम्बितचरणरजसः, दक्षिणाशामुखविशेषकस्य, सुरलोकादेकहुंकारनिपातितनहुषप्रकटप्रभावस्य भगवतो महामुनेरगस्त्यस्य भार्यया लोपामुद्रया स्वयमुपरचितालवालकैः, करपुटसलिलसेकसंवर्धितैः, सुतनिर्विशेषैरुपशोभितं पादपैः, तत्पुत्रेण च गृहीतव्रतेनाषाढिना पवित्रभस्मविरचितत्रिपुण्ड्काभरणेन, कुशचीवरवाससा, मौञ्जमेखलाकलितमध्येन, गृहीतहरितपर्णपुटेन प्रत्युटजमटता भिक्षां दृढदस्युनाम्ना पवित्रीकृतम्, अतिप्रभूतेध्माहरणाच्च यस्येध्मवाह इति पिता द्वितीयं नाम चकार। दिशि दिशि शुकहरितैश्च कदलीवनैः श्यामलीकृतपरिसरं सरिता च कलशयोनिपरिपीतसागरमार्गानुगतयेव बद्धवेणिकया गोदावर्या परिगतमाश्रमपदमासीत्।

यत्र च दशरथवचनमनुपालयन्नुत्सृष्टराज्यो दशवदनलक्ष्मीविभ्रमविरामो रामो महामुनिमगस्त्यमनुचरन्सह सीतया लक्ष्मणोपर-

चित रुचिरपर्णशालः पञ्चवट्यां कंचित्कालं सुखमुवास । बलि-कर्मकुसुमान्युद्धरन्त्याः सीतायाः करतलादिव संक्रान्तो यत्र रागः स्फुरति लताकिसलयेषु । यत्र च दशरथसुतनिशितशरनिकरनिपात-निहतरजनीचरबलबहलरुधिरसिक्तमूलमद्यापि तद्रागाविद्धनिर्गतप-लाशमिवाभाति नवकिसलयमरण्यम् । अधुनापि यत्र जलधरसमये गम्भीरमभिनवजलधरनिवहनिनादमाकर्ण्य भगवतो रामस्य त्रि-भुवनविवरव्यापिनश्चापघोषस्य स्मरन्तो न गृह्णन्ति शष्पकवलमज-स्रमश्रुजललुलितदृष्टयो वीक्ष्य शून्या दश दिशो जराजर्जरितवि-षाणकोटयो जानकीसंवर्धिता जीर्णमृगाः । यस्मिन्ननवरतमृग-यानिहतशेषवनहरिणप्रोत्साहित इव कृतसीताविप्रलम्भः कनकमृगो राघवमतिदूरं जहार । यत्र च मैथिलीवियोगदुःखदुःखितौ रावण-विनाशसूचकौ चन्द्रसूर्याविव कबन्धग्रस्तौ समं रामलक्ष्मणौ त्रिभु-वनभयं महच्चक्रतुः । अत्यायतश्च यस्मिन्दशरथसुतबाणनिपातितो योजनबाहोर्बाहुरगस्त्यप्रासादनागतनहुषाजगरकायशङ्कां चकार ऋ-षिगणस्य । जनकतनया च भर्त्रा विरहविनोदनार्थमुटजाभ्यन्तरलिखि-ता यत्र रामनिवासदर्शनोत्सुका पुनरिव धरणीतलादुल्लसन्ती वन-चरैरद्याप्यालोक्यते ।

## ❊ पम्पा सरोवरवर्णनम् ❊

तस्य च संप्रत्यपि प्रकटोपलक्ष्यमाणपूर्ववृत्तान्तस्य, अगस्त्याश्रमस्य नातिदूरे जलनिधिपानप्रकुपितवरुणप्रोत्साहितेन, अगस्त्यमत्सरात्त-दाश्रमसमीवर्त्यपर इव वेधसा जलनिधिरुत्पादितः, प्रलयकालविघ-ट्टिताष्टदिग्विभागसंधिबन्धं गगनतलमिव भुवि निपतितम् , आदि-वराहसमुद्धृतधरामण्डलस्थानमिव जलपूरितम् , उत्फुल्लकुमुदकुवल-

यकह्लारम् उन्निद्रारविन्दमधुद्रवबद्धचन्द्रकम्, अलिकुलपटलान्धकारितसौगन्धिकम्, सारसितसमदसारसम्, अम्बुरुहमधुपानमत्तकलहंसकामिनीकृतकोलाहलम्, अनेकजलचरपतङ्गशतसंचलनचलितवाचालवीचिमालम्, एकदेशावतीर्णमुनिजनापूर्यमाणकमण्डलुकलजलध्वनिमनोहरम्, उन्मिषदुत्पलवनमध्यचारिभिः सवर्णतया रसितानुमेयैः कादम्बैरासेवितम्, उपान्तकेतकीरजःपटलबद्धकूलपुलिनम्, आसन्नाश्रमाऽऽगततापसक्षालितार्द्रवल्कलकषायपाटलतटजलम्, उपतटवृक्षपल्लवानिलवीजितम्, अविरलतमालवीथ्यन्धकारिताभिः,बालिनिर्वासितेन संचरता प्रतिदिनमृष्यमूकवासिना सुग्रीवेणावलुप्तफललघुलताभिः,उद्वासितापसानां देवतार्चनोपयुक्तकुसुमाभिः,उत्पतज्जलचरपक्षपुटविगलितजलबिन्दुसेकसुकुमारकिसलयाभिःवनराजिभिरुपरुद्धतीरम्, अपरसागराशङ्किभिः सलिलमादातुमवतीर्णैर्जलधरैरिव बहलपङ्कमलिनैर्वनकरिभिरनवरतमापीयमानसलिलम्, अगाधमनन्तमप्रतिममपां निधानं पम्पाभिधानं पद्मसरः। यत्र च विकचकुवलयप्रभाश्यामायमानपक्षपुटान्यद्यापि मूर्तिमद्रामशापग्रस्तानीव मध्यचारिणालोक्यन्ते चक्रवाकनाम्नां मिथुनानि।

## ❀ विशाल शाल्मलि वर्णनम् ❀

तस्यैवंविधस्य सरसः पश्चिमे तीरे राघवशरप्रहारजर्जरितताल-तरुखण्डस्य च समीपे दिग्गजकरदण्डानुकारिणा जरदजगरेण सततमावेष्टितमूलतया बद्धमहालवाल इव, तुङ्गस्कन्धावलम्बिभिरनिलवेल्लितैरहिनिर्मोकैर्धृतोत्तरीय इव, दिक्चक्रवालपरिमाणमिव गृह्णता भुवनान्तरालविप्रकीर्णेन शाखासंचयेन प्रलयकालताण्डवप्रसारितभुजसहस्रमुडुपतिशेखरमिव विडम्बयितुमुद्यतः, निखिलशरीरव्या-

पिनीभिरतिदूरोन्नताभिर्जीर्णतया शिराभिरिव परिगतो व्रततिभिः जरातिलकबिन्दुभिरिव कण्टकैराचिततनुः, इतस्ततः परिपीतसागरसलिलैर्गमनागतैः पत्ररथैरिव शाखान्तरेषु निलीयमानैः क्षणमम्बुभारालसैराद्रीकृतपल्लवैर्जलधरपटलैरप्यदृष्टशिखरः, तुङ्गतया नन्दनवनश्रियमिवालोकयितुमभ्युद्यतः, स्वसमीपवर्तिनामुपरि संचरतां गगनतलगमनखेदाया सितानां रविरथतुरङ्गमाणां सृक्कपरिस्रुतैः फेनपटलैः संदेहिततूलराशिभिर्धवलीकृतशिखरशाखः, वनगजकपोलकण्डूयनलग्नमदनिलीनमत्तमधुकरमालेन लोहशृङ्खलाबन्धननिश्चलेनेव कल्पस्थायिना मूलेन समुपेतः, कोटराभ्यन्तरनिविष्टैः स्फुरद्भिः सजीव इव मधुकरपटलैः नवजलधरव्यूह इव नभसि दर्शितोन्नतिः, अखिलभुवनतलावलोकनप्रासाद इव वनदेवतानाम् , अधिपतिरिव दण्डकारण्यस्य, शाखाबाहुभिरुपगुह्येव विन्ध्याटवीं स्थितो महाजीर्णः शाल्मली ।

## * शुक कुल वर्णनम् *

तत्र च शाखाग्रेषु कोटरोदरेषु पल्लवान्तरेषु स्कन्धसंधिषु महावकाशतया विश्रब्धविरचितकुलायसहस्राणि, दुरारोहतया विगतभयानि, नानादेशसमागतानि शुकशकुनिकुलानि प्रतिवसन्ति स्म। यैः परिणामविरलदलसंहतिरपि स वनस्पतिरविरलदलनिचयश्यामल इवोपलक्ष्यते दिवानिशं निलीनैः । ते च तस्मिन्नतिवाह्यातिवाह्य निशामात्मनीडेषु प्रतिदिनमुत्थायोत्थायाहारान्वेषणाय नभसि विरचितपंक्तयो, दिवसकररथतुरगप्रभानुलिप्तमिव गगनतलं प्रदर्शयन्तः, गगनायततैः पक्षपुटैः कदलीदलैरिव दिनकरखरकरनिकरपरिखेदिताम्याशामुखानि वीजयन्तः, वियति विसारिणीं शष्पवी-

थीमिवारचयन्तः, सेन्द्रायुधमिवान्तरिक्षमादधाना विचरन्ति स्म। कृताहाराश्च पुनः प्रतिनिवृत्त्यात्मकुलायावस्थितेभ्यः शावकेभ्यो विविधान्फलरसान्कलममञ्जरीविकारांश्च प्रहतहरिणरुधिरानुरक्तशार्दूलनखकोटिपाटलेन चञ्चुपुटेन दत्त्वा दत्त्वाधरीकृतसर्वस्नेहेनासाधारणेन गुरुणापत्यप्रेम्णा तस्मिन्नेवक्रोडान्तर्निहिततनयाः क्षपाः क्षपयन्ति स्म।

## ॥ वैशम्पायनस्यस्वजनन जननीनिधन वर्णनम् ॥

एकस्मिंश्च जीर्णकोटरे जायया सह निवसतः पश्चिमे वयसि वर्तमानस्य कथमपि पितुरहमेको विधिवशात्सूनुरभवम्। अतिप्रबलया चाभिभूता ममैव जायमानस्य प्रसववेदनया जननी मे परलोकमगमत्। अभिमतजायाविनाशशोकदुःखितोऽपि खलु तातः सुतस्नेहादभ्यन्तरे निरुध्य पटुप्रसरमपि शोकमेकाकी मत्संवर्धनपर एवाभवत्। अतिपरिणतवयाश्च कुशचीरानुकारिणीमल्पावशिष्टजीर्णपिच्छजालजर्जरामवस्रस्तांसदेशा शिथिलामपगतोत्पतनसंस्कारां पक्षसंततिमुद्वहन्, उपारूढकम्पतया संतापकारिणीमङ्गलग्नां जरामिव विधुन्वन्नकठोरशेफालिकाकुसुमनालपिञ्जरेण कलममञ्जरीदलनमसृणितक्षीणोपान्त्यलेखेन स्फुटिताग्रकोटिना चञ्चुपुटेन परनीडपतिताभ्यः शालिवल्लरीभ्यस्तण्डुलकणानादाय वृक्षमूलनिपतितानि च शुककुलावदलितानि फलशकलानि समाहृत्य परिभ्रमितुमशक्तो मह्यमदात्। प्रतिदिवसमात्मना च मदुपभुक्तशेषमकरोदशनम्।

## ॥ अन्येद्युः प्रभाते कानन विक्षोभ वर्णनम् ॥

एकदा तु प्रभातसंध्यारागलोहिते गगनतलकमलिनीमधुनुर-

कपक्षपुटे वृद्धहंस इव मन्दाकिनीपुलिनादपरजलनिधितटमवतरति चन्द्रमसि, परिणतरङ्कुरोमपाण्डुनि व्रजति विशालतामाशाचक्रवाले, गजरुधिररक्तहरिसटालोमलोहिनीभिः प्रतप्तलाक्षिकतन्तुपाटलाभिः, आयामिनीभिः, अशिशिरकिरणदीधितिभिः पद्मरागशलाकासंमार्जनीभिरिव समुत्सार्यमाणे गगनकुट्टिमकुसुमप्रकरे तारागणे, संध्यामुपासितुमुत्तराशावलम्बिनि मानससरस्तीरमिवावतरति सप्तर्षिमण्डले, तटगतविघट्टितशुक्तिसंपुटविप्रकीर्णम्, अरुणकरप्रेरणाधोगलितमुडुगणमिव मुक्ताफलनिकरमुद्वहति धवलितपुलिनमुदन्वति पूर्वतरे, तुषारबिन्दुवर्षिणि विबुद्धशिखिकुले विजृम्भमाणकेसरिणि क्षपाजलजडकेसरं कुसुमनिकरमुदयगिरिशिखरस्थितं सवितारमिवोद्दिश्य पल्लवाञ्जलिभिः समुत्सृजति कानने, रासभरोमधूसरासु वनदेवताप्रासादानां तरूणां शिखरेषु पारावतमालायमानासु धर्मपताकास्विव समुन्मिषन्तीषु तपोवनाग्निहोत्रधूमलेखासु, अवश्यायसीकरिणि लुलितकमलवने चलितपल्लवलतालास्योपदेशव्यसनिनि विघटमानकमलखण्डमधुसीकरासारवर्षिणि कुसुमामोदतर्पितालिजाले निशावसानजातजडिम्नि मन्दमन्दसंचारिणि प्रवाति प्राभातिके मातरिश्वनि, कमलवनप्रबोधमङ्गलपाठकानामिभगण्डडिण्डिमानां मधुलिहां कुमुदोदरेषु विघटमानदलपटनिरुद्धपक्षसंहतीनामुच्चरत्सु हुंकारेषु, प्रभातशिशिरवाय्वाहतमुत्तप्तजतुरसाश्लिष्टपक्ष्ममालमिव सशेषनिद्राजिह्मतारं चक्षुरुन्मीलयत्सु शनैः शनैः रूषरशय्याधूसरक्रोडरोमराजिषु वनमृगेषु, इतस्ततः संचरत्सु वनचरेषु, विजृम्भमाणे श्रोत्रहारिणि पम्पासरःकलहंसकोलाहले, समुल्लसति नर्तितशिखण्डिनि मनोहरे वनगजकर्णतालशब्दे, क्रमेण च गगनतलमवतरतो दिवसकरवारणस्यावचूलचामरकलाप इवोपलक्ष्यमाणे मञ्जिष्ठरागलोहिते किरणजाले, शनैः शनै-

उदिते भगवति सवितरि, पम्पासरःपर्यन्ततरुशिखरसंचारिण्यध्यासितगिरिशिखरे दिवसकरजन्मनि हततारे पुनरिव कपीश्वरे वनमभिपतति बालातपे, स्पष्टे जाते प्रत्यूषसि, नचिरादिव दिवसाष्टमभागभाजि स्पष्टभासि भास्वति भूते, प्रयातेषु च यथाभिमतानि दिगन्तराणि शुककुलेषु, कुलायनिलीननिभृतशुकशावकसनाथेऽपि निःशब्दतया शून्य इव तस्मिन्वनस्पतौ, स्वनीडावस्थित एव ताते मयि च शैशवादसंजातबलसमुद्भिद्यमानपक्षपुटे पितुः समीपवर्तिनि कोटरगते, सहसैव तस्मिन्महावने संत्रासितसकलवनचरः सरभसमुत्पतत्पतत्रिपक्षपुटशब्दसंततः भीतकरिपोतचीत्कारपीवरः प्रचलितलताकुलमत्तालिकुलक्वणितमांसलः परिभ्रमदुद्घोणवनवराहरवघर्घरो गिरिगुहासुप्तप्रबुद्धसिंहनिनादोपबृंहितः कम्पयन्निव तरून्भगीरथावतार्यमाणगङ्गाप्रवाहकलकलबहलो भीतवनदेवताकर्णितो मृगयाकोलाहलध्वनिरुदचरत्। आकर्ण्य च तमहमश्रुतपूर्वमुपजातवेपथुरर्भकतया जर्जरितकर्णविवरो भयविह्वलः समीपवर्तिनः पितुः प्रतीकारबुद्ध्या जराशिथिलपक्षपुटान्तरमविशम्।

## * लुब्धककुलकोलाहलाऽऽकर्णनम् *

अनन्तरं च सरभसम् 'इतो गजयूथपतिलुलितकमलिनीपरिमलः, इतः क्रोडकुलदश्यमानभद्रमुस्तारसामोदः, इतो निपतितशुष्कपत्रमर्मरध्वनिः, इतो वनमहिषविषाणकोटिकुलिशभिद्यमानवल्मीकधूलिः, इतो मृगकदम्बकम्, इतो वनवराहयूथम्, इतो वनमहिषवृन्दम्, इतः शिखण्डिमण्डलनिरुतम्, इतः कपिञ्जलकुलकलकूजितम्, इतः कुररकुलक्वणितम्, इतोमृगपतिनखभिद्यमानकुम्भकुञ्जररसितम्, इयमार्द्रपङ्कमलिना वराहपद्धतिः, इयमभिनवशष्पकवलरसश्यामला हरि-

गरोमन्थफेनसंहतिः, इयमुन्मदगन्धगजगण्डकण्डूयनपरिमलमिलीनमुखरमधुकरविरुतिः, एषा निपतितरुधिरबिन्दुसिक्तशुष्कपत्रपाटला रुरुपदवी, एतद्द्विरदचरणमृदितविटपपल्लवपटलम्, एतत्खड्गिकुलक्रीडितम्, चमरीपंक्तिरियमनुगम्यताम्, उच्छुष्कमृगकरीषपांसुला त्वरिततरमध्यास्यतामियं वनस्थली, तरुशिखरमारुह्यताम्, आलोक्यतां दिगियम्, आकर्ण्यतामयं शब्दः, गृह्यतां धनुः, अवहितैः स्थीयताम्, विमुच्यन्तां श्वानः' इत्यन्योन्यमभिवदतो मृगयासक्तस्य महतो जनसमूहस्य तरुगहनान्तरितविग्रहस्य क्षोभितकाननं कोलाहलमशृणवम्।

## ※वन्यसत्वविद्रवो वैशम्पायनस्य तन्निमित्तजिज्ञासा च※

अथ नातिचिरादेवानुलेपनार्द्रमृदङ्गध्वनिधीरेण, गिरिविवरविजृम्भितप्रतिनादगम्भीरेण शबरशरताडितानां केसरिणां निनादेन संत्रस्तयूथमुक्तानामेकाकिनां च संचरतामनवरतकरास्फोटमिश्रेण जलधररसितानुकारिणा गजयूथपतीनां कण्ठगर्जितेन, सरभससारमेयविलुप्यमानावयवानामालोलतरलतारकाणामेणकानां च करुणकूजितेन, निहतयूथपतीनां वियोगिनीनां अनुगतकलभानां च स्थित्वा स्थित्वासमाकर्ण्य कलकलमुत्कर्णपल्लवानामितस्ततः परिभ्रमन्तीनां प्रत्यग्रपतिविनाशशोकदीर्घेण करिणीनां चीत्कृतेन, कतिपयदिवसप्रसूतानां च खड्गिधेनुकानां त्रासपरिभ्रष्टपोतकान्वेषिणीनामुन्मुक्तकण्ठमारसन्तीनामाक्रन्दितेन, तरुशिखरसमुत्पतितानामाकुलाकुलचारिणां च पत्ररथानां कोलाहलेन, रूपानुसारप्रधावितानां च मृगयूथानां युगपदतिरभसपादपाताभिहताया भुवः कम्पमिव जनयता चरणशब्देन, कर्णान्ताकृष्टज्यानां च मदकलकुररकामिनीकण्ठकूजितकल-

शबलितेन शरनिकरवर्षिणां धनुषां निनादेन, पवनाहतिक्वणितधाराणामसीनां च कठिनमहिषस्कन्धपीठपातिनां रणितेन, शुनां च सरभसविमुक्तघर्घरध्वनीनां वनान्तरव्यापिना ध्वानेन सर्वतः प्रचलितमिव तदरण्यमभवत्। अचिराच्च प्रशान्ते तस्मिन्मृगयाकलकले निर्वृष्टमूकजलधरवृन्दानुकारिणि मथनावसानोपशान्तवारिणि सागर इव स्तिमिततामुपगते कानने, मन्दीभूतभयोऽहमुपजातकुतूहलः पितुरुत्सङ्गादीषदिव निष्क्रम्य कोटरस्थ एव शिरोधरां प्रसार्य संत्रासतरलतारकः शैशवात्किमिदमित्युपजातदिदृक्षस्तामेव दिशं चक्षुः प्राहिणवम्।

## * वनचरचमूदर्शनम् *

अभिमुखमापतच्च तस्माद्वनान्तरादर्जुनभुजदण्डसहस्रविप्रकीर्णमिव नर्मदाप्रवाहम्, अनिलचलितमिव तमालकाननम्, एकीभूतमिव कालरात्रीणां यामसंघातम्, अञ्जनशिलास्तम्भसंभारमिव क्षितिकम्पविघूर्णितम्, अन्धकारपुञ्जमिव रविकिरणाकुलितम्, अन्तकपरिवारमिव परिभ्रमन्तम्, अवदारितरसातलोद्भूतमिव दानवलोकम्, अशुभकर्मसमूह मिवैकत्र समागतम्, अनवरतशरनिकरवर्षिरामनिहतखरदूषणबलनिवहमिव तदपध्यानात्पिशाचतामुपगतम्, कलिकालबन्धुवर्गमिवैकत्र संगतम्, अवगाहप्रस्थितमिव वनमहिषयूथम् अचलशिखरस्थितकेसरिकराकृष्टपतनविशीर्णमिव कालाभ्रपटलम्, अखिलरूपविनाशाय धूमकेतुजालमिव समुद्गतम्, अन्धकारितकाननम्, अनेकसहस्रसंख्यम्, अतिभयजनकमुत्पातवेतालव्रातमिव शबरसैन्यमद्राक्षम्।

## * मातङ्गाभिधमातङ्गसेनापतिविलोकनम् *

मध्ये च तस्य महतः शबरसैन्यस्य प्रथमे वयसि वर्तमानम् , अतिकर्कशत्वादायससमयमिव निर्मितम् , एकलव्यमिव जन्मान्तरगतम् , उद्भिद्यमानश्मश्रुराजितया प्रथममदलेखामण्डयमानगण्डभित्तिमिव गजयूथपतिकुमारकम् , असितकुवलयश्यामलेन देहप्रभाप्रवाहेण कालिन्दीजलेनेव पूरितारण्यम् , आकुटिलाग्रेण स्कन्धावलम्बिना कुन्तलभारेण केसरिणमिव गजमदमलिनीकृतेन केसरकलापेनोपेतम् , आयतललाटम्, अतितुङ्गघोरघोणम् , आपाटलया मृगकुलक्षयरात्रिसंध्यायमानया शोणितार्द्रयेव दृष्ट्या रञ्जयन्तमिवाऽऽशाविभागान् , जानुलम्बेन कुञ्जरकरप्रमाणमिव गृहीत्वा निर्मितेन भुजयुगलेनोपशोभितम्, अन्तरालग्नाऽऽश्यानहरिणरुधिरबिन्दुना स्वेदजलकणिकाञ्चितेन गुञ्जाफलमिश्रैः करिकुम्भमुक्ताफलैरिवरचिताभरणेन विन्ध्यशिलाविशालेन वक्षःस्थलेनोद्भासमानम् , अविरतश्रमाभ्यासादुल्लिखितोदरम्, इभमदमलिनमालानस्तम्भयुगलमुपहसन्तमिवोरुदण्डद्वयेन, लाक्षालोहितकौशेयपरिधानम्, अकारणेऽपि क्रूरतया बद्धत्रिपताकाभ्रुकुटिकराले ललाटफलके प्रबलभक्त्याराधितया मत्परिग्रहोऽयमिति कात्यायन्या त्रिशूलेनेवाङ्कितम् , उपजातपरिचयैरनुगच्छद्भिः श्रमवशाद्दूरविनिर्गताभिः स्वभावपाटलतया शुष्काभिरपि हरिणशोणितमिवक्षरन्तीभिर्जिह्वाभिरावेद्यमानखेदैः विवृतमुखतया स्पष्टदृष्टदन्तांशून् दंष्ट्रान्तराललग्नकेसरिसटानिव सृक्कभागानुद्वहद्भिः स्थूलवराटकमालिकापरिगतकण्ठै र्महावराहदंष्ट्राप्रहारजर्जरैरल्पकायैरपि महाशक्तित्वादनुपजातकेसरैरिव केसरिकिशोरकैः, मृगवधूवैधव्यदीक्षादानदक्षैरनेकवर्णैःश्वभिः, अतिप्रमाणाभिश्च केसरिणामभयप्रदानयाचनार्थमागताभिः सिंहीभिरिव कौलेयककुटुम्बिनीभिरनुगम्यमानम् ,

लितुमपि न शेकुः। एकैकेन कृपाणप्रहारेण तालतरूनमृणालदण्डानिव लुलाव। सकलराजन्यवंशवनदावानलस्य परशुरामस्येवास्य नाराचाः शिखरिशिलातलभिदो बभूवुः। दशपुरुषसंवाहनयोग्येन चाऽयोदण्डेन श्रममकरोत्। ऋते च महाप्राणतायाः सर्वाभिरन्याभिः कलाभिरनुचकार तं वैशम्पायनः। चन्द्रापीडस्य तु सकलकलाकलापपरिचयबहुमानेन शुकनासगौरवेण सहपांसुक्रीडनतया सहसंवृद्धतया च सर्वविश्रम्भस्थानं द्वितीयमिव हृदयं वैशम्पायनः परं मित्रमासीत्। निमेषमपि तेन विना स्थातुमेकाकी न शशाक। वैशम्पायनोऽपि तमुष्णकरमिव वासरोऽनुगच्छन्न क्षणमपि विरहयांचकार।

**यौवनाऽवतारः**

एवं तस्य सर्वविद्यापरिचयमाचरतश्चन्द्रापीडस्य सकललोकहृदयानन्दजननश्चन्द्रोदय इव प्रदोषस्य, कुसुमप्रसव इव कल्पपादपस्य, अभिनवाभिव्यज्यमानरागरमणीयः सूर्योदय इव कमलवनस्य, विविधलास्यविलासयोग्यः कलाप इव शिखण्डिनो यौवनारम्भः प्रादुर्भवन्रमणीयस्यापि द्विगुणां रमणीयतां पुपोष। लक्ष्म्या सह वितस्तार वक्षःस्थलम्। बन्धुजनमनोरथैः सहापूर्यतोरुदण्डद्वयम्। अरिजनेन सह तनिमानमभजत मध्यभागः। त्यागेन सह प्रथिमानमाततान नितम्बभागः। प्रतापेन सहाऽऽरुरोह रोमराजिः। चरितेन सह धवलतामभजत लोचनयुगलम्। स्वरेण सह गम्भीरतामाजगाम हृदयम्।

**गुरुकुलात् प्रत्यावर्त्तनम्**

एवं च क्रमेण समारूढयौवनारम्भं, परिसमाप्तसमग्रकलाविज्ञानम्, अधीताशेषविद्यं चावगम्याऽनुमोदितम् आचार्यैः, चन्द्रापीडमानेतुं राजा बलाधिकृतं बलाहकनामानमाहूय अतिप्रशस्तेऽहनि प्राहिणोत्। स

गत्वा विद्यागृहं द्वाःस्थैः समावेदितः प्रविश्य शिरसा प्रणम्य स्वभूमिसमुचिते राजसमीप इव सविनयमासने राजपुत्रानुमतो न्यषीदत्। स्थित्वा च मुहूर्तमात्रं बलाहकश्चन्द्रापीडमुपसृत्यदर्शितविनयो व्यजिज्ञपत्—'कुमार, महाराजः समाज्ञापयति—'पूर्णा नो मनोरथाः। अधीतानि शास्त्राणि। शिक्षिताः सकलाः कलाः। गतः सर्वास्वायुधविद्यासु परां प्रतिष्ठाम्। अनुमतोऽसि विनिर्गमाय विद्यागृहात्सर्वाचार्यैः। उपगृहीतशिक्षं अवगतसकल कलाकलापं पौर्णमासीशशिनमिव नवोद्गतं पश्यतु त्वां जनः। व्रजन्तु सफलतामतिचिरदर्शनोत्कण्ठितानि लोकलोचनानि। दर्शनं प्रति ते समुत्सुकान्यतीव सर्वाण्यन्तःपुराणि। अयमत्रभवतो दशमः संवत्सरो विद्यागृहमधिवसतः प्रविष्टोऽसि षष्ठमनुभवन्वर्षम्। एवं संपिण्डितेनाधुना षोडशेन प्रवर्धसे। तदद्यप्रभृति निर्गत्य दर्शनोत्सुकाभ्यो दत्त्वा दर्शनमखिलमातृभ्योऽभिवाद्य च गुरून् अपगतनियन्त्रणो यथासुखमनुभव राज्यसुखानि नवयौवनललितानि च। संमानय राजलोकम्। पूजय द्विजातीन्। परिपालय प्रजाः। आनन्दय बन्धुवर्गम्। अयं च त्रिभुवनैकरत्नमनिलगरुडसमजव इन्द्रायुधनामा तुरङ्गमः प्रेषितो महाराजेन द्वारि तिष्ठति। एष खलु देवस्य पारसीकाधिपतिनाश्चर्यमितिकृत्वा 'जलधिजलादुत्थितमयोनिजमिदमश्वरत्नमासादितं मया महाराजाधिरोहणयोग्यम्' इति संदिश्य प्रहितः। तदयमनुगृह्यतामधिरोहणेन। इदं च मूर्धाभिषिक्तपार्थिवकुलप्रसूतानां विनयोपपन्नानां शूराणां अभिरूपाणां कलावतां च कुलक्रमागतानां राजपुत्राणां सहस्रं परिचारार्थमनुप्रेषितं तुरङ्गमारूढं प्रणामलालसं प्रतिपालयति'। इत्यभिधाय विरतवचसि बलाहके चन्द्रापीडः पितुराज्ञां शिरसि कृत्वा नवजलधरध्वानगम्भीरया गिरा 'प्रवेश्यतामिन्द्रायुधः' इति निर्जिगमिषुरादिदेश।

**इन्द्रायुधवर्णनम्**

अथ वचनानन्तरमेवप्रवेशितम्, उभयतः खलीनकटकावलग्नाभ्यां पदे पदे कृताकुञ्चनप्रयत्नाभ्यां पुरुषाभ्यामवकृष्यमाणम्, अतिप्रमाणम्, ऊर्ध्वकरपुरुषप्राप्यपृष्ठभागम्, आपिबन्तमिव संमुखागतमखिलमाकाशम्, अतिनिष्ठुरेण मुहुर्मुहुः प्रकम्पितोदररन्ध्रेण हेषारवेण निर्भर्त्सयन्तमिवालीकवेगदुर्विदग्धं गरुत्मन्तम्, रंहःसंघातमिव मूर्तिमन्तम्, अत्यायतमतिनिर्मांसतया समुत्कीर्णमिव वदनमुद्वहन्तम्, आननमण्डलनिहितारुणमणिसमुद्गतैरंशुकलापैरुपेतेन अवसक्तरक्तचामरेणेव निश्चलशिखरेण कर्णयुगलेन विराजमानम्, अश्वालंकारनिहितमरकतरत्नप्रभाश्यामायमानदेहतया गगनतलनिपतितदिवसकररथतुरङ्गमशङ्कामिवोपजनयन्तम्, अतितेजस्वितया जवनिरोधरोषवशात्प्रतिरोमकूपमुद्गतानि सागरपरिचयलग्नानि मुक्ताफलानीव स्वेदलवजालकानि वर्षन्तम्, इन्द्रनीलमणिपादपीठानुकारिभिः अञ्जनशिलाघटितैरिव अनवरतपतनोत्पतनजनितविषमस्वरमुखरैः पृथुभिः खुरपुटैर्जर्जरितवसुंधरैः मुरजवाद्यमिवाभ्यस्यन्तम्, उत्कीर्णमिव जङ्घासु, विस्तारितमिवोरसि, श्लक्ष्णीकृतमिव मुखे, प्रसारितमिव कंधरायाम्, उल्लिखितमिव पार्श्वयोः, द्विगुणीकृतमिव जघनभागे, त्रैलोक्यसंचरणसहायमिव मारुतस्य, वेगसब्रह्मचारिणमिव मनसः, हरिचरणमिव सकलवसुंधरोल्लङ्घनक्षमम्, वरुणहंसमिव मानसप्रचारम्, ग्रीष्मदिवसमिव महायाममुग्रतेजसं च, भुजंगमिव सदागत्यभिमुखम् उदधिपुलिनमिव शङ्खमालिकाभरणम्, भीतमिव स्तब्धकर्णम्, विद्याधरराज्यमिव चक्रवर्तिनरवाहनोचितम्, सूर्योदयमिव सकलभुवनार्घार्हम्, अश्वातिशयमिन्द्रायुधमद्राक्षीत्। दृष्ट्वा च तमदृष्टपूर्वम् अमानुषलोकोचिताकारम् अशेषलक्षणोपपन्नम् अश्वरूपातिशयमतिधीरप्रकृतेरपि चन्द्रापीडस्य पस्पर्श विस्मयं हृदयम्। आसीच्चास्य मनसि— 'सरस-

परिवर्तनचलितवासुकिभ्रमितमन्दरेण मथ्नता जलधिजलमिदमश्वरत्नमनभ्युद्धरता किं नाम रत्नमुद्धृतं सुरासुरलोकेन। अनारोहता च मेरुशिलातलविशालमस्य पृष्ठमाखण्डलेन किमासादितं त्रैलोक्यराज्यफलम्। उच्चैःश्रवसा विस्मितहृदयो वञ्चितः खलु जलनिधिना शतमखः। मन्ये च भगवतो नारायणस्य चक्षुर्गोचरमियता कालेन नायमुपगतो येनाद्यापि तां गरुडारोहणव्यसनितां न त्यजति। अहो खल्वतिशयितत्रिदशराज्यसमृद्धिरियं तातस्य राज्यलक्ष्मीः। यदेवंविधान्यपि सकलत्रिभुवनदुर्लभानि रत्नान्युपकरणतामागच्छन्ति। अतितेजस्वितया महाप्राणतया च सदैवतेवेयमस्याकृतिर्यत्सत्यमारोहणे शङ्कामिव मे जनयति। न हि सामान्यवाजिनाममानुषलोकोचिताः सकलत्रिभुवनविस्मयजनन्य ईदृश्यो भवन्त्याकृतयः। दैवतान्यपि हि मुनिशापवशादुज्झितनिजशरीराणि शापवचनोपनीतान्येतानि शरीरान्तराण्यध्यासत एव। असंशयमनेनापि महात्मना केनापि शापभाजा भवितव्यम्। आवेदयतीव मदन्तःकरणमस्य दिव्यताम्, इति विचिन्तयन्नेवारुरुक्षुरासनादुदतिष्ठत्। मनसा च तं तुरङ्गमुपसृत्य 'महात्मन्नर्वन्, योऽसि सोऽसि। नमोस्तु ते। सर्वथा मर्षणीयोऽयमारोहणातिक्रमोऽस्माकम्। अपरिगतानि दैवतान्यप्यनुचितपरिभवभाञ्जि भवन्ति' इत्यामन्त्रयांबभूव। विदिताभिप्राय इव स तमिन्द्रायुधश्चटुलशिरःकेसरसटाहत्याकूणिताऽऽकेकरतारकेण तिर्यक्चक्षुषा विलोक्य हेषारवमकरोत्। अथानेन मधुरहेषितेन दत्तारोहणाभ्यनुज्ञ इवेन्द्रायुधमारुरोहचन्द्रापीडः। समारुह्य तं प्रादेशमात्रमिव त्रैलोक्यमखिलं मन्यमानो निर्गत्य जलधरविमुक्तोपलासारपरुषेण जर्जरयतेव रसातलमतिनिष्ठुरेण खुरपुटानां रवेण रजोनिरुद्धघ्राणघोरघोषेण च हेषितेन बधिरीकृतसकलत्रिभुवनविवरम्, अदृष्टपर्यन्तमश्वसैन्यमपश्यत्। तच्च सागरजलमिव चन्द्रोद-

थेन चन्द्रापीडनिर्गमेन सकलमेव संचचालाश्वीयम्। अहमहमिकया च प्रणामलालसाः सरभसापनीतातपत्रशून्यशिरसः परस्परोत्पीडन-कुपिततुरङ्गमनिवारणायस्ता राजपुत्रास्तं पर्यवारयन्त। एकैकशश्च प्रति नामग्राहमावेद्यमाना बलाहकेन विचलितमुकुटपद्मरागकिरणोद्गम-च्छलेनानुरागमिवोद्गमद्भिः दूरावनतैः शिरोभिःप्रणेमुः। चन्द्रापीडस्तु तान्सर्वान्मानयित्वायथोचितम्, अनन्तरं तुरङ्गमाधिरूढेनानुगम्यमानः वैशम्पायनेन, राज्यलक्ष्मीनिवासपुण्डरीकाकृतिना स्थूलमुक्ताकलाप-जालकावृतेन, उपरिचिह्नीकृतं केसरिणमुद्वहता अतिमहता, कार्तस्वर दण्डेन, ध्रियमाणेन, आतपत्रेण निवारितातपः; पुरः प्रधावता तरुण-वीरपुरुषप्रायेण, अनेकसहस्रसंख्येन, पदातिपरिजनेन, 'जय जीवेति' च मधुरवचसा मङ्गलप्रायमनवरतमुच्चैः पठता बन्दिजनेन स्तूयमानः, नगराभिमुखं प्रतस्थे।

नगर प्रवेशः

क्रमेण च तं समासादितविग्रहम् अनङ्गमि-वावतीर्णं, नगरमार्गमनुप्राप्तम्, अवलोक्य सर्व एव परित्यक्तसकलव्यापारः, रजनिकरोदयपरिबुध्य-मानकुमुदवनानुकारी जनः समजनि। सत्यस्मिन्मुखकुमुद-कदम्बकविकृताकृतिः कार्तिकेयो विडम्बयति कुमारशब्दम्। अहो, वयमतिपुण्यभाजो यदमानुषीमस्याकृतिमन्तःसमारूढप्रीतिरस-निःस्यन्दविस्तारितेन लोचनयुगलेनानिवारिताः पश्यामः। सफला नोऽद्य जाता जन्मवत्ता। सर्वथा नमोऽस्मै रूपान्तरधारिणे भगवते चन्द्रापीडच्छद्मने पुण्डरीकेक्षणाय' इति वदन्नारचितप्रणामाञ्जलिः नगरलोकः प्रणनाम। सर्वतश्च समुपावृतकपाटपुटप्रकटवातायनसहस्र-तया चन्द्रापीडदर्शनकुतूहलात् नगरमपि समुन्मीलितलोचनमिव-

हम् इवाऽभवत् । अनन्तरं च 'समाप्तसकलविद्यो विद्यागृहान्निर्गतोऽ-यं चन्द्रापीडः—'इति समाकर्ण्यालोकनकुतूहलिन्यः सर्वस्मिन्नेव-नगरे ससंभ्रममुत्सृष्टार्धपरिसमाप्तप्रसाधनव्यापाराः, हर्म्यतलानि ललनाः समारुरुहुः । अन्याश्च मरकतवातायनविवरविनिर्गतमुख-मण्डला विकचकमलकोशपुटामम्बरतलसंचारिणीं कमलिनीमिव दर्शयन्त्यो ददृशुः । तासामापीयमान इव लोचनपुटैः, अनुगम्यमान इव हृदयैः, अनुबध्यमान इवाभरणरत्नरश्मिरज्जुभिः, चन्द्रापीडो राजकुलसमीपमाससाद ।

**राजप्रासाद वर्णनम्**

क्रमेण च द्वीपान्तरागतदूतशतसंकुलं राजद्वार-मासाद्य तुरंगमादवततार । अवतीर्य च करतलेन करे वैशम्पायनमवलम्ब्य पुरः सविनयं प्रस्थितेन बलाहकेनोपदिश्यमान-मार्गः,त्रिभुवनमिव पुञ्जीभूतम्, आगृहीतकनकवेत्रलतैः सितवारबाणैः सितोष्णीषैः श्वेतद्वीपसंभवैरिव महाप्रमाणैः दिवानिशमालिखितैरिव उत्कीर्णैरिव तोरणस्तम्भनिषण्णैर्द्वारपालैरनुज्झितद्वारदेशम् ; अनेक-संथवनचन्द्रशालाविटङ्कवेदिकासंकटशिखरैः अपहसितसितकैलास-शोभैः अमलसुधाच्छदातैः सप्रालेयशैल मिव महाप्रासादैः विराज-मानम् ; अन्तर्गतायुधनिवहाभिराशीविषकुलसंकुलाभिः पातालगुहा-भिरिवातिगम्भीराभिरायुधशालाभिरुपेतम् ; अबलाचरणालक्तकरस-रक्तमणिशकलैः शिखरनिलीनशिखिकुलकृतकेकारवकलकलैः क्रीडा-पर्वतकैरुपशोभितम् ; आलानस्तम्भनिषण्णेन अनवरतसंगीतकमृदङ्ग-ध्वनिं निश्चलकर्णतालेनाकर्णयता, आमीलितलोचनत्रिभागेण, वामदशनकोटिनिषण्णहस्तेन, सलीलमुभयपार्श्वावलम्बिवर्ण कम्बल-तया विन्ध्यगिरिणेवाविष्कृतधातुविचित्रितपक्षसंपुटेन, मदजल-मलिनेन कपोलतलदोलायमानेन मधुकरकुलेनालंक्रियमाणेन, अत्यु-

दग्रतया पूर्वकायस्य वामनतया च जघनभागस्य पातालादिवोत्तिष्ठता निशासमयेनेव, वामनरूपेणेव कृतत्रिपदीविलासेन, प्रसाधितेनेवालोलकर्णपल्लवाहतमुखेन, गन्धमादननाम्ना गन्धहस्तिना सनाथीकृतैकदेशम्; भूपालवल्लभैर्मन्दुरागतैस्तुरङ्गमैरुद्भासितम्; अधिकरणमण्डपगतैश्चार्यवेषैरत्युच्चवेत्रासनोपविष्टैर्धर्ममयैरिव धर्माधिकारिभिर्महापुरुषैरधिष्ठितम्; अधिगतसकलग्रामनगरनामभिः एकभवनमिव जगदखिलमालोकयद्भिरालिखितसकलभुवनव्यापारतया धर्मराजनगरव्यतिकरमिव दर्शयद्भिरधिकरणलेखकैरालिख्यमानशासनसहस्रम्; आस्थानमण्डपगतेन च यथोचितासनोपविष्टेन, आस्फालयता परिवादिनीम्, आलिखता चित्रफलके भूमिपालप्रतिबिम्बम्, आबध्नता काव्यगोष्ठीम्, आतन्वता परिहासकथां, विन्दता बिन्दुमतीं, चिन्तयता प्रहेलिकां, भावयता नरपतिकृतकाव्यसुभाषितानि, आकर्णयता वैतालिकगीतम्, अनेकसहस्रसंख्येन, धवलोष्णीषपट्टाश्लिष्टविकटकिरीटसंकटशिरसा, मूर्धाभिषिक्तेन सामन्तलोकेनाधिष्ठितम्; एकदेशनिषण्णचामीकरशृङ्खलासंयतश्वगणम्; इतस्ततः प्रचलितपरिचितामितकस्तूरिकाकुरङ्गपरिमलवासितदिङ्मुखम्; अनेककुब्जकिरातवर्षवरबधिरवामनमूकसंकुलम्; उपाहृतकिन्नरमिथुनम्; आनीतवनमानुषम्; आरब्धमेषकुक्कुटकुररकपिञ्जललावकवर्तिकायुद्धम्; उत्कूजितचकोरकादम्बहारीतकोकिलम्; आलप्यमानशुकसारिकम्; इभपतिपरिमलामर्षजृम्भितैश्च निःकूजद्भिः शिखरिणां जीवितैरिव गिरिगुहानिवासिभिर्गृहीतैः पञ्जरकेसरिभिरुद्भास्यमानम्; उत्त्रास्यमानैः, काञ्चनभवनप्रभाजनितदावानलशङ्कैः, लोलतारकैः, भ्रमद्भिः, भवनहरिणकदम्बकैः, लोचनप्रभया शबलीकृतदिगन्तरम्; उद्दामकेकारवानुमीयमानमरकतकुट्टिमस्थितशिखण्डिमण्डलम्; अन्तःपुरेण च बालिकाजनप्रस्तुतकन्दुकपाञ्चालिकाक्रीडेन, अनवरतसंवाह्यमान-

दोलाशिखरक्वणितघण्टाटङ्कारपूरिताशामुखेन, धूतधौतधवलदुकूलोत्तरीयैः, कलधौतदण्डावलम्बिभिः, पलितपाण्डुरमौलिभिः; गम्भीराकृतिभिः कञ्चुकिभिरधिष्ठितेन समुपेताभ्यन्तरम्; जलधरसनाथमिव कृष्णागुरुधूमपटलैः ;सबालातपमिव रक्ताशोकैः ;सतारागणमिव मुक्ताकलापैः;सवर्षासमयमिव धारागृहैः;सतडिल्लतमिव हैममयीभिर्मयूरयष्टिभिः; सगृहदेवतमिव शालभञ्जिकाभिः; उत्कृष्टकविगद्यमिव विविधवर्णश्रेणिप्रतिपाद्यमानाभिनवार्थसंचयम्; अप्सरोगणमिव प्रकटमनोरमारम्भम्; नाटकमिव पताकाङ्कशोभितम्; शोणितपुरमिव बाणयोग्यावासोपेतम्; संपूर्णचन्द्रोदयमिव मृदुकरसहस्रसंवर्धितरत्नालयम्; दिग्गजमिवाऽविच्छिन्नमहादानसंतानम्; व्याकरणमिव प्रथममध्यमोत्तमपुरुषविभक्तिस्थितानेकादेशकारकाऽऽख्यातसंप्रदानक्रियाऽव्ययप्रपञ्चसुस्थितम्; उदधिमिव भयान्तःप्रविष्टसपक्षभूभृत्सहस्रसंकुलम्; उषाऽनिरुद्धसमागममिव चित्रलेखादर्शितविचित्रसकलत्रिभुवनाऽऽकारम्; संध्यासमयमिव दृश्यमानचन्द्रापीडोदयम्; स्कन्दमिव शिखिक्रीडारम्भचञ्चलम्; कुलाङ्गनाप्रचारमिव सर्वदोपजातशङ्कम्; वासरारम्भमिव पद्मरागारुणीक्रियमाणनिशान्तम्; दिव्यमुनिगणमिव कलापिसनाथश्वेतकेतुशोभितम्; भारतसमरमिव कृतवर्मबाणचक्रसंभारभीषणम्; पातालमिव महाकञ्चुक्यध्यासितम्; महाद्वारमपि दुष्प्रवेशम्; अवन्तिविषयगतमपि मागधजनाधिष्ठितम्; राजकुलं विवेश। ससंभ्रमोपगतैश्च कृतप्रणामैः प्रतीहारमण्डलैरुपदिश्यमानमार्गः, सर्वतः प्रचलितेन च राजलोकेन प्रत्येकशः प्रतीहारनिवेद्यमानेन सादरं प्रणम्यमानः, पदे पदे चाभ्यन्तरविनिर्गताभिः आचारकुशलाभिरन्तःपुरवृद्धाभिः क्रियमाणावतरणमङ्गलः, भुवनान्तराणीव विविधप्राणिसहस्रसंकुलानि सप्तकक्षान्तराण्यतिक्रम्य, अभ्यन्तरावस्थितम्, अनवरतशस्त्रग्रहणश्यामि-

कालीढकरतलैः करचरणलोचनवर्जमसितलोहजालकावृतशरीरैः, कुलक्रमागतैः, उदात्तान्वयैः, अनुरक्तैः, महाप्राणतया ऽतिकर्कशतया च दानवैरिव, सर्वतः शरीररक्षाधिकारनियुक्तैः पुरुषैः परिवृतम्, उभयतो वारविलासिनीभिश्चानवरतमुद्धूयमानधवलचामरम्, हंस-धवलशयनतले निषण्णं पितरमपश्यत्। 'आलोकये' ति च प्रतीहार-वचनानन्तरमतिदूरावनतेन शिरसा कृतप्रणामम् एह्येहीत्यभिदधानो दूरादेव प्रसारितभुजयुगलः शयनतलादीषदुच्छ्वसितमूर्तिः,आनन्दजल-पूर्यमाणलोचनः तं पिता विनयावनतमालिलिङ्ग। आलिङ्गितोन्मुक्तश्च पितुश्चरणपीठसमीपे पिण्डीकृतमुत्तरीयमात्मताम्बूलकरङ्कग्राहिन्या सत्वरमासनीकृतमपनयेति शनैर्वदन्नग्रचरणेन समुत्सार्य चन्द्रापीडः क्षितितल एव निषसाद। अनन्तरं निहिते चास्यासने राज्ञा सुतनि-र्विशेषमुपगूढो वैशम्पायनो न्यषीदत्। मुहूर्तमिव स्थित्वा 'गच्छ वत्स! पुत्रवत्सलां मातरमभिवाद्य दर्शनलालसां, यथाक्रमं सर्वा जननी दर्शनेनानन्दय' इति विसर्जितः पित्रा, सविनयमुत्थाय निवारित-परिजनो वैशम्पायनद्वितीयोऽन्तःपुरप्रवेशयोग्येन राजपरिजनेनोप-दिश्यमानवर्त्माऽन्तःपुरमाययौ। तत्र धवलकञ्चुकावच्छन्नशरीरैरनेक-शतसंख्यैः समन्तात्परिवृतां शुद्धान्तवंशिकैः, अतिप्रशान्ताकाराभिश्च कषायरक्ताम्बरधारिणीभिः संध्याभिरिव सकललोकवन्द्याभिः, विदितानेककथावृत्तान्ताभि र्भूतपूर्वाः पुण्याः कथाः कथयन्तीभिः, इति-हासान्वाचयन्तीभिः, पुस्तकान्दधतीभिः, धर्मोपदेशान्निवेदयन्तीभिः, जरत्प्रव्रजिताभिर्विनोद्यमानाम्; अनवरताभिधूयमानबालव्यजन-कलापाम्; अङ्गनाजनेन च वसनाभरणकुसुमपटवासताम्बूल-तालवृन्ताङ्गरागभृङ्गारधारिणा मण्डलोपविष्टेनोपास्यमानाम्; पयो-धरावलम्बिमुक्तागुणाम्; आसन्नदर्पणपतितमुखप्रतिबिम्बाम्; समुपसृत्य मातरं प्रणनाम। सा तु तं ससंभ्रममुत्थाप्य सत्यप्याज्ञा-

संपादनदक्षे पार्श्वपरिवर्तिनि परिजने स्वयमेव कृतावतरणका प्रस्नुत-पयोधरक्षरत्पयोबिन्दुच्छलेन द्रवीभूय स्नेहाकुलेन निर्गच्छतेव हृदयेनान्तः शुभशतानीव ध्यायन्ती मूर्धन्युपाघ्राय तं सुचिरमाशिश्लेष । अनन्तरं च तथैव कृतयथोचितसमुपचारमाश्लिष्टवैशम्पायना स्वयमुपविश्य विनयादवनितले समुपविशन्तमाकृष्य बलादनिच्छन्तमपि चन्द्रापीडमुत्सङ्गमारोपितवती । ससंभ्रमपरिजनोपनीतायामासन्द्यामुपविष्टे च वैशम्पायने चन्द्रापीडं पुनः पुनरालिङ्ग्य ललाटदेशे वक्षसि भुजशिखरयोश्च मुहुर्मुहुः करतलेन परामृशन्ती विलासवती तमवादीत्—'वत्स, कठिनहृदयस्ते पिता येनैवमाकृतिरीदृशी त्रिभुवनलालनीया क्लेशमतिमहान्तमियन्तं कालं लम्भिता । कथमसि सोढवानतिदीर्घामिमां गुरुजनयन्त्रणाम् । अहो, बालस्यापि सतः कठोरस्येव ते महद्धैर्यम् । अहो, विगलितशिशुजनक्रीडाकौतुक-लाघवमर्भकस्यापि ते हृदयम् । अहो गुरुजनस्योपरि भक्तिरसाधारणी । यथा पितुः प्रसादात्समस्ताभिरुपेतो विद्याभिरालोकितोऽस्येवमचिरेणैव कालेनानुरूपाभिर्वधूभिरुपेतमालोकयिष्यामि' इत्येवमभिधाय लज्जास्मितावनतं कपोले पर्यचुम्बदेनम् । एवं च तत्रापि नातिचिरमेव स्थित्वा क्रमेण सर्वान्तःपुराणि दर्शनेनानन्दयामास ।

**शुकनास सदन गमनम्**

निर्गत्य च राजकुलद्वारात् बहिःस्थितविविधगजघटासंकटम् , अनेकतुरङ्गसहस्रसंबाधम् , अपरिमितजनसमूहसहस्रसंमर्दसंकुलम् , अभ्यन्तरप्रविष्टानां च सामन्तानां अतिचिरावस्थाननिर्वेदप्रसुप्ताधोरणाभिः अपर्याणाभिः सपर्याणाभिश्च शतसहस्रशः करिणीभिराकीर्णं शुकनासगृहद्वारमासाद्य सत्वरप्रधावितैर्द्वारदेशावस्थितैः प्रतीहारपुरुषैर-निवार्यमाणोऽपि राजकुल इव राजपुत्रो बाह्याङ्गण एव तुरगाद-

अततार। द्वारदेशावस्थापिततुरङ्गश्च वैशम्पायनमवलम्ब्य पुरः प्रधावितैः समुत्सारितपरिजनैः तत्प्रतीहारमण्डलैः उपदिश्यमानमार्गः, तथैव नरेन्द्रवृन्दैः सेवासमुपस्थितैः प्रणम्यमानः, तथैव च प्रचण्डप्रतीहारहुँकारभयमूकीभवत्परिजनानि कक्षान्तराणि निरीक्षमाणः, तथैव च नवनवसुधावदातप्रासादनिरन्तरं द्वितीयमिव राजकुलं शुकनासभवनं विवेश। प्रविश्य चानेकनरेन्द्रसहस्रमध्योपस्थितमपरमिव पितरमुपदर्शितविनयो दूरावनतेन मौलिना शुकनासं ववन्दे। शुकनासस्तं ससंभ्रमं समुत्थायानुपूर्व्येणोत्थितराजलोकः सादरमभिमुखदत्ताविरलपदः प्रहर्षविस्फारितविलोचनागतानन्दजलकणः समं वैशम्पायनेन प्रेम्णा गाढमालिलिङ्ग। आलिङ्गितोन्मुक्तश्च सादरोपनीतमपहाय रत्नासनमवनावेव राजपुत्रः समुपाविशत्। तदनु च वैशम्पायनः। उपविष्टे च राजपुत्रे शुकनासवर्जम् अन्यदखिलमवनिपालचक्रम् उज्झितनिजासनम् अवनितलमभजत। स्थित्वा च तूष्णीं क्षणमिव शुकनासः समुद्गतप्रीतिपुलकैरङ्गैरावेद्यमानहर्षप्रकर्षस्तमब्रवीत्—'तात, अद्य खलु देवस्य तारापीडस्य समासविद्यमुपारूढयौवनमालोक्य भवन्तं सुचिराद्भुवनराज्यफलप्राप्तिरुप जाता। अद्य समृद्धाः सर्वा गुरुजनाशिषः। अद्य फलितमनेकजन्मान्तरोपात्तमवदातं कर्म। अद्य प्रसन्नाः कुलदेवताः। न ह्यपुण्यभाजां भवादृशास्त्रिभुवनविस्मयजनकाः पुत्रतां प्रतिपद्यन्ते। क्वेदं वयः। क्वेयममानुषी शक्तिः। क्व चेदमशेषविद्याग्रहणसामर्थ्यम्। अहो, धन्याः प्रजा यासां भरतभगीरथप्रतिमो भवानुत्पन्नः पालयिता। किं खलु कृतमवदातं कर्म वसुंधरया ययासि भर्ता समासादितः। हरिवक्षःस्थलनिवासाऽसद्ग्रहव्यसनितया हता खलु लक्ष्मीः, या विग्रहवती भवन्तं नोपसर्पति। सर्वथा कल्पकोटीर्महावराह इव दंष्ट्रावलयेन वह बाहुना वसुंधराभारं सह पित्रा' इत्यभिधाय च वयमाभरणवसनकुसुमाङ्गरागादिभिरभ्यर्च्य विसर्जयांचकार।

विश्राम भोजन-शयनाऽऽदिकम्

विसर्जितश्चोत्थायान्तःपुरं प्रविश्य दृष्ट्वा वैशम्पायनमातरं मनोरमाऽभिधानां निर्गत्य समारुह्येन्द्रायुधं पित्रा पूर्वकल्पितम्, प्रतिच्छन्दकमिव राजकुलस्य, द्वारावस्थितसितपूर्णकलशम्, आबद्धहरितचन्दनमालम्, उल्लसितसितपताकासहस्रम्, अभ्याहतमङ्गलतूर्यरवपरिपूरितदिगन्तरम्, उपरचितविकचकमलकुसुमप्रकरम्, अचिरकृताग्निकार्यम्, उज्ज्वलविविक्तपरिजनम्, उपपादिताशेषगृहप्रवेशमङ्गलं कुमारो भवनं जगाम । गत्वा च श्रीमण्डपावस्थिते शयने मुहूर्तमुपविश्य सह तेन राजपुत्रलोकेनाभिषेकादिमशनावसानमकरोद्दिवसविधिम् । अभ्यन्तरे च शयनीयगृह एवेन्द्रायुधस्याऽवस्थानमकल्पयत् ।

एवंप्रायेण चास्योदन्तेन तदहः परिणतिमुपययौ । गगनतलादवपतन्त्या दिवसश्रियः पद्मरागनूपुरमिव स्वप्रभापिहितरन्ध्रं रविमण्डलमुन्मुक्तपादं पपात । कमलिनीपरिमलपरिचयागतालिमालाकुलितकण्ठं कालपाशैरिव चक्रवाकमिथुनमाकृष्यमाणं विजघटे । क्रमेण च प्रतीचीकर्णपूररक्तोत्पले लोकान्तरमुपगते भगवति गभस्तिमालिनि, उल्लसितायां संध्यायाम्, कृष्णागुरुपङ्कपत्रलतास्विव तिमिरलेखासु स्फुरन्तीषु, कमलिनीनिपीतमातपमुन्मूलयितुमन्धकारपल्लवेष्विव प्रविशत्सु रक्तकमलोदराणि मधुकरकुलेषु, शनैः शनैश्च निशाविलासिनीमुखावतंसपल्लवे गलिते संध्यारागे, भवनसहकारशाखावलम्बिपञ्जरेषु विगतालापेषु शुकसारिकानिवहेषु, कृतस्वस्त्ययनेषु निष्क्रामत्सु पुरोहितेषु, विसर्जितराजलोकविरलपरिजनेषु विस्तारितेष्विव राजकुलकक्षान्तरेषु, प्रज्वलितदीपिकासहस्रप्रतिबिम्बचुम्बितेषु कृतविकचचम्पकदलोपहारेष्विव मणिभूमिकुट्टिमेषु, निद्रालसेषु पञ्जरकेसरिषु, प्रवृत्ते प्रदोषसमये, चन्द्रा-

पीडः राजकुलं गत्वा पितुः समीपे मुहूर्तं स्थित्वा, दृष्ट्वा च विलासवतीम्, आगत्य स्वभवनम्, अनेकरत्नप्रभाशबलमुरगराजफणामण्डलमिव हृषीकेशः शयनतलमधिशिश्ये।

### मृगया वर्णनम्

प्रभातायां च निशीथिन्यां समभ्यनुज्ञातः पित्रा ऽभिनवमृगयाकौतुकाकृष्यमाणहृदयो भगवत्यनुदित एव सहस्ररश्मावारुह्येन्द्रायुधमग्रतो बालेयप्रमाणान् कौलेयकान् चामीकरशृङ्खलाभिऽऽराकर्षद्भिः, जरद्व्याघ्रचर्मशबलवसनकञ्चुकधारिभिः, आबद्धनिबिडकक्षैः, अनवरतश्रमोपचितोरुपिण्डकैः, कोदण्डपाणिभिः, अनवरतकृतकोलाहलैः, प्रधावद्भिः, श्वपोषकैर्द्विगुणीक्रियमाणगमनोत्साहः; बहुगजतुरगपदातिपरिवृतो वनं ययौ। तत्र च कर्णान्ताकृष्टमुक्तैर्भल्लैर्मदकलकलभकुम्भभित्तिभिदुरैश्च नाराचैः वनवराहान्केसरिणः शरभांश्चमराननेककुरङ्गकांश्च सहस्रशो जघान। अन्यांश्च जीवत एव महाप्राणतया स्फुरतो जग्राह। समारूढे च मध्यमह्नः सवितरि स्नानोत्थितेनेव श्रमसलिलबिन्दुवर्षमनवरतमुज्झता, मुहुर्मुहुर्दशनविघट्टनैः खणखणायितखरखलीनेन, श्रमशिथिलमुखविगलितफेनिलरुधिरलवेन, इन्द्रायुधेनोह्यमानः; अनेकरूपानुसरणसंभ्रमपरिभ्रष्टच्छत्रधरतया छत्रीकृतेन नवपल्लवेन निवार्यमाणातपः; विविधवनलताकुसुमरेणुधूसरो वसन्त इव विग्रहवान्; दूरविच्छिन्नेन पदातिपरिजनेन शून्यीकृतपुरोभागः; प्रजवितुरङ्गमाधिरूढैरल्पावशिष्टैः सह राजपुत्रैः 'एवं मृगपतिः, एवं वराहः, एवं महिषः, एवं शरभः, एवं हरिणः' इति तमेव मृगयावृत्तान्तमुच्चारयन्स्वभवनमाजगाम। अवतीर्य च तुरङ्गमात्ससंभ्रमप्रधावितपरिजनोपनीत उपविश्यासने वारबाणमवतार्य, अपनीय चाशेषं तुरङ्गाधिरोहणोचितं वेषपरिग्रहम्, इतस्ततः प्रचलिततालवृन्तपवनापनी-

यमानश्रमो मुहूर्तं विशश्राम। विश्रम्य च मणिरजतकनककलशशत-सनाथाम्, अन्तर्विन्यस्तकाञ्चनपीठां, स्नानभूमिमगात्। निर्वर्तिता-भिषेकव्यापारस्य च विविक्तवसनपरिमृष्टवपुषः स्वच्छदुकूलपल्लवाक-लितमौलेः गृहीतवाससः कृतदेवार्चनस्य अङ्गरागभूमौ समुपविष्टस्य राज्ञा विसर्जिता राजकुलपरिचारिकाः पटलकविनिहितानि विवि-धान्याभरणानि माल्यान्यङ्गरागान्वासांसि चादाय पुरतस्तस्यो-पतस्थुरुपनिन्युश्च। यथाक्रममादाय च ताभ्यः प्रथमं स्वयमुपलिप्य वैशम्पायनम् उपरचिताङ्गरागः, दत्त्वा च समीपवर्तिभ्यो यथार्हमाभ-रणवसनाङ्गरागकुसुमानि, विविधमणिभाजनसहस्रसारं शारदमम्बर-तलमिव स्फुरिततारागणम् आहारमण्डपमगच्छत्। तत्र च द्विगुणित-कुथासनोपविष्टः समीपोपविष्टेन तद्गुणोपवर्णनपरेण वैशम्पायनेन यथार्हं भूमिभागोपवेशितेन राजपुत्रलोकेन 'इदमस्मै दीयताम्, इदम-स्मै दीयताम्' इति प्रसादविशेषदर्शनसंवर्धितसेवारसेन च सह आहारविधिमकरोत्। उपस्पृश्य च गृहीतताम्बूलस्तस्मिन्मुहूर्तमिव स्थित्वा इन्द्रायुधसमीपमगमत्। तत्र चानुपविष्ट एव तद्गुणोपवर्णन-प्रायालापाः कथाः कृत्वा सत्यप्याज्ञाप्रतीक्षणोन्मुखे पार्श्वपरिवर्तिनि परिजने तद्गुणहृतहृदयः स्वयमेवेन्द्रायुधस्य पुरो यवसमाकीर्य निर्गत्य राजकुलमयासीत्। तेनैव च क्रमेणावलोक्य राजानम् आगत्य निशामनैषीत्।

**पत्रलेखा परिचयः**

अपरेद्युः प्रभातसमय एव सर्वान्तःपुरा-धिकृतम्, अवनिपतेः परमसंमतम्, अनुमार्गा-ऽऽगतया च, प्रथमे वयसि वर्तमानया, राजकुलसंवासप्रगल्भयाप्य-नुज्झितविनयया, किंचिदुपारूढयौवनया, शक्रगोपकालोहितरागे-णांशुकेन रचितावगुण्ठनया, अङ्गलावण्यप्रभाप्रवाहेणामृतरसनदी-

पूरेणेव भवनमापूरयन्त्या, ज्योत्स्नयेव राहुग्रहग्रासभयादपहाय रजनिकरमण्डलं भुवमवतीर्णया, समृजुवृत्ततुङ्गनासिकया, विकसितपुण्डरीकलोचनया, मुक्ताफलप्रायालंकारया, राधेयराज्यलक्ष्म्येवोपपादिताङ्गरागया, नववनलेखयेव कोमलतनुलतया, महानुभावाकारया, अनुगम्यमानं कन्यया, कैलासनामानं कञ्चुकिनमायान्तमपश्यत्। स कृतप्रणामः समुपसृत्य क्षितितलनिहितदक्षिणकरो विज्ञापयामास—'कुमार', महादेवी विलासवती समाज्ञापयति—'इयं खलु कन्यका महाराजेन पूर्वं कुलूतराजधानीमवजित्य कुलूतेश्वरदुहिता पत्रलेखाभिधाना बालिका सती बन्दीजनेन सह आनीयान्तःपुरपरिचारिकामध्यमुपनीता। सा मया विगतनाथा राजदुहितेति च समुपजातस्नेहया दुहितृनिर्विशेषमियन्तं कालमुपलालिता संवर्धिता च। तदियमिदानीमुचिता भवतस्ताम्बूलकरङ्कवाहिनीति कृत्वा मया प्रेषिता। न चास्यामायुष्मता परिजनसामान्यदृष्टिना भवितव्यम्। बालेव लालनीया। स्वचित्तवृत्तिरिव चापलेभ्यो निवारणीया। शिष्येव द्रष्टव्या। सुहृदिव सर्वविश्रम्भेष्वभ्यन्तरीकरणीया। दीर्घकालसंवर्धितस्नेहतया स्वसुतायामिव हृदयमस्यामस्ति मे। महाऽभिजनराजवंशप्रसूता चार्हतीयमेवंविधानि कर्माणि। नियतं स्वयमेवेयमतिविनीततया कतिपयैरेव दिवसैः कुमारमाराधयिष्यति। अविदितशीलश्चास्याः कुमार इति संदिश्यते। सर्वथा तथा कल्याणिना प्रयतितव्यं यथेयमतिचिरमुचिता परिचारिका ते भवति'। इत्यभिधाय विरतवचसि कैलासे कृताभिजातप्रणामां पत्रलेखामनिमिषलोचनं सुचिरमालोक्य चन्द्रापीडः 'यथाज्ञापयत्यम्बा' एवमुक्त्वा कञ्चुकिनं प्रेषयामास। पत्रलेखा तु ततः प्रभृति दर्शनेनैव समुपजातसेवारसा न दिवा न रात्रौ न सुप्तस्य नासीनस्य नोत्थितस्य न भ्रमतो न राजकुलगतस्य छायेव राजसूनोः पार्श्वं

मुमोच । चन्द्रापीडस्यापि तस्या दर्शनादारभ्य प्रतिक्षणमुपचीयमाना महती प्रीतिरासीत् । आत्महृदयादव्यतिरिक्तामिव चैनां सर्वविश्रम्भेष्वमन्यत ।

**चन्द्रापीडंप्रति शुकनासस्योपदेशः**

एवं समतिक्रामत्सु दिवसेषु राजा चन्द्रापीडस्य यौवराज्याभिषेकं चिकीर्षुः प्रतीहारानुपकरणसंभारसंग्रहार्थमादिदेश । समुपस्थितयौवराज्याभिषेकं च तं कदाचिद्दर्शनार्थमागतमारूढविनयमपि विनीततरमिच्छन् शुकनासः सविस्तरमुवाच—'तात चन्द्रापीड, विदितवेदितव्यस्य, अधीतसर्वशास्त्रस्य ते नाल्पमप्युपदेष्टव्यमस्ति । केवलं च निसर्गत एवाभानुभेद्यम् अरत्नालोकोच्छेद्यम् अप्रदीपप्रभापनेयम् अतिगहनं तमो यौवनप्रभवम् । अपरिणामोपशमो दारुणो लक्ष्मीमदः । कष्टम् अनञ्जनवर्तिसाध्यम् अपरम् ऐश्वर्यतिमिरान्धत्वम् । अजस्रम् अक्षपावसानप्रबोधा घोरा च राज्यसुखसंनिपातनिद्रा भवतीति विस्तरेणाभिधीयसे । गर्भेश्वरत्वम् अभिनवयौवनत्वम् अमानुषशक्तित्वं चेति महतीयं खल्वनर्थपरंपरा सर्वा । अविनयानामेकैकमप्येषामायतनम्, किमुत समवायः । यौवनारम्भे च प्रायः शास्त्रजलप्रक्षालननिर्मलापि कालुष्यमुपयाति बुद्धिः । अनुज्झितधवलतापि सरागैव भवति यूनां दृष्टिः । अपहरति च वात्येव शुष्कपत्रं समुद्भूतरजोभ्रान्तिः अतिदूरम् आत्मेच्छया यौवनसमये पुरुषं प्रकृतिः । इन्द्रियहरिणहारिणी च सततदुरन्तेयमुपभोगमृगतृष्णिका । नवयौवनकषायितात्मनश्च सलिलानीव तान्येव विषयस्वरूपाण्यास्वाद्यमानानि मधुरतराण्यापतन्ति मनसः । नाशयति च दिङ्मोह इवोन्मार्गप्रवर्तकः पुरुषमत्यासङ्गो विषयेषु । भवादृशा एव भवन्ति भाजनान्युपदेशानाम् । अपगतमले हि

मनसि स्फटिकमणाविव रजनिकरगभस्तयो विशन्ति सुखेनोपदेश-गुणाः । हरत्यतिमलिनमन्धकारमिव दोषजातं प्रदोषसमयनिशा-कर इव गुरूपदेशः । अयमेव चानास्वादितविषयरसस्य ते काल उपदेशस्य । कुसुमशरशरप्रहारजर्जरिते हि हृदि जलमिव गलत्युप-दिष्टम् । अकारणं च भवति दुष्प्रकृतेरन्वयः श्रुतं च विनयस्य । चन्दनप्रभवो न दहति किमनलः । किं वा प्रशमहेतुनापि न प्रचण्ड-तरीभवति वडवानलो वारिणा । गुरूपदेशश्च नाम पुरुषाणाम् अखिलमलप्रक्षालनक्षमम् अजलं स्नानम् , अनुपजातपलितादिवैरूप्यम् अजरं वृद्धत्वम् , अनारोपितमेदोदोषं गुरूकरणम् , नोद्वेगकरः प्रजा-गरः । विशेषेण राज्ञाम् । विरला हि तेषामुपदेष्टारः । प्रति-शब्दक इव राजवचनमनुगच्छति जनो भयात् । उद्दामदर्पश्वयथु-स्थगितश्रवणविवराश्चोपदिश्यमानमपि ते न शृण्वन्ति । शृण्वन्तो-ऽपि च गजनिमीलितेनावधीरयन्तः खेदयन्ति हितोपदेशदायिनो गुरून् । आलोकयतु तावत्कल्याणाभिनिवेशी लक्ष्मीमेव प्रथमम् । इयं हि खड्गमण्डलोत्पलवनविभ्रमभ्रमरी लक्ष्मीः क्षीर-सागरात्–पारिजातपल्लवेभ्यो रागम् , इन्दुशकलादेकान्तवक्रताम् , उच्चैःश्रवसश्चञ्चलताम् , कालकूटान्मोहनशक्तिम् , मदिराया मदम् , कौस्तुभमणेर्नैष्ठुर्यम् , इत्येतानि सहवासपरिचयवशाद्विरहविनोद-चिह्नानि गृहीत्वेवोद्गता । न ह्येवंविधमपरिचितमिह जगति किंचिदस्ति यथेयमनार्या । लब्धापि खलु दुःखेन परिपाल्यते । दृढगुणसंदान-निस्पन्दीकृतापि नश्यति । उद्दामदर्पभटसहस्रोल्लासितासिलतापञ्जर-विधृताप्यपक्रामति । न परिचयं रक्षति । नाभिजनमीक्षते । न रूपमालो-कयते । न कुलक्रममनुवर्तते । न शीलं पश्यति । न वैदग्ध्यं गणयति । नश्रुतमाकर्णयति । न धर्ममनुरुध्यते । न त्यागमाद्रियते । न विशेषज्ञतां विचारयति । नाचारं पालयति । न सत्यमनुबुध्यते । न लक्षणं

प्रमाणीकरोति । गन्धर्वनगरलेखेव पश्यत एव नश्यति । अद्याप्याऽऽरूढमन्दरपरिवर्तावर्तभ्रान्तिजनितसंस्कारेव परिभ्रमति । कमलिनीसंचरणव्यतिकरलग्ननलिननालकण्टकेव न क्वचिदपि निर्भरमाबध्नाति पदम् । पारुष्यमिवोपशिक्षितुमसिधारासु निवसति । अप्रत्ययबहुला च दिवसान्तकमलमिव समुपचितमूलदण्डकोशमण्डलमपि मुञ्चति भूभुजम् । लतेव विटपकानध्यारोहति । गङ्गेव वसुजनन्यपि तरंगबुद्बुदचञ्चला, दिवसकरगतिरिव प्रकटितविविधसंक्रान्तिः, पातालगुहेव तमोबहुला, प्रावृडिवाचिरद्युतिकारिणी, दुष्टपिशाचीव दर्शितानेकपुरुषोच्छ्राया स्वल्पसत्वमुन्मत्तीकरोति । सरस्वतीपरिगृहीतमीर्ष्ययेव नालिङ्गति । जनं गुणवन्तमपवित्रमिव न स्पृशति । उदारसत्वममङ्गलमिव न बहु मन्यते । शूरं कण्टकमिव परिहरति । दातारं दुःस्वप्नमिव न स्मरति । विनीतं पातकिनमिव नोपसर्पति । मनस्विनमुन्मत्तमिवोपहसति । परस्परविरुद्धं चेन्द्रजालमिव दर्शयन्ती प्रकटयति जगति निजं चरितम् । तथाहि—संततमूष्माणमुपजनयन्त्यपि जाड्यमुपजनयति । उन्नतिमादधानापि नीचस्वभावतामाविष्करोति । तोयराशिसंभवापि तृष्णां संवर्धयति । ईश्वरतां दधानाप्यशिवप्रकृतित्वमातनोति । विग्रहवत्यप्यप्रत्यक्षदर्शना । पुरुषोत्तमरतापि खलजनप्रिया । रेणुमयीव स्वच्छमपि कलुषीकरोति । यथा यथा चेयं चपला दीप्यते तथातथा दीपशिखेव कज्जलमलिनमेव कर्म केवलमुद्वमति । इयं संवर्धनवारिधारा तृष्णाविषवल्लीनाम्, व्याधगीतिरिन्द्रियमृगाणाम्, निवासजीर्णवलभी धनमदपिशाचिकानाम्, तिमिरोद्गतिः शास्त्रदृष्टीनाम्, पुरःपताका सर्वाऽविनयानाम्, उत्पत्तिनिम्नगा क्रोधावेगग्राहाणाम्, आपानभूमिर्विषयमधूनाम्, संगीतशाला भ्रूविकारनाट्यानाम् । आवासदरी दोषाऽऽशीविषाणाम्, उत्सारणवेत्रलता सत्पुरुषव्यवहाराणाम्, प्रस्तावना

कपटनाटकस्य, वध्यशाला साधुभावस्य, राहुजिह्वा धर्मेन्दुमण्डलस्य। न हि तं पश्यामि यो ह्यपरिचितयाऽनया न निर्भरमुपगूढः यो वा न विप्रलब्धः। नियतमियमालेख्यगतापि चलति, श्रुताप्यभिसंधत्ते, चिन्तितापि वञ्चयति। एवंविधयापि चानया दुराचारया कथमपि दैववशेन परिगृहीता विक्लवा भवन्ति राजानः सर्वाविनयाधिष्ठानतां च गच्छन्ति। तथाहि—अभिषेकसमय एव चैतेषां मङ्गलकलशैरिव प्रक्षाल्यते दाक्षिण्यम्, अग्निकार्यधूमेनेव मलिनीक्रियते हृदयम्, पुरोहितकुशाग्रसंमार्जनीभिरिवापसार्यते परलोकदर्शनम्, चामर-पवनैरिवापह्रियते सत्यवादिता, वेत्रदण्डैरिवोत्सार्यन्ते गुणाः। तथाहि—केचित् संपद्भिः प्रलोभ्यमानाः अनेकदोषोपचितेन दोषा-सृजेव रागावेशेन बाध्यमानाः, विविधविषयग्रासलालसैः पञ्चभि-रप्यनेकसहस्रसंख्यैः इवेन्द्रियैः आयास्यमानाः, प्रकृतिचञ्चलतया लब्धप्रसरेणैकेनापि शतसहस्रतामिवोपगतेन मनसाकुलीक्रियमाणा-विह्वलतामुपयान्ति। धनोष्मणा पच्यमाना इव विचेष्टन्ते, गाढ-प्रहाराऽऽहता इवाङ्गानि न धारयन्ति, कुलीरा इव तिर्यक्परिभ्रमन्ति, मृषावादविपाकसंजातमुखरोगा इवातिकृच्छ्रेण जल्पन्ति, सप्तच्छद-तरव इव कुसुमरजोविकारैः पार्श्ववर्तिनां शिरःशूलमुत्पादयन्ति, आसन्नमृत्यव इव बन्धुजनमपि नाभिजानन्ति, कालदष्टा इव महा-मन्त्रैरपि न प्रतिबुध्यन्ते, तृष्णाविषमूर्च्छिताः कनकमयमिव सर्वं पश्यन्ति, इषव इव पानवर्धिततैक्ष्ण्याः परप्रेरिता विनाशयन्ति, दूरस्थितान्यपि फलानीव दण्डविक्षेपैः महाकुलानि शातयन्ति, अकाल-कुसुमप्रसवा इव मनोहराकृतयोऽपि लोकविनाशहेतवः, श्रूयमाणा-अपि प्रेतपटहा इवोद्वेजयन्ति, चिन्त्यमाना अपि महापातकाध्यव-साया इवोपद्रवमुपजनयन्ति, अनुदिवसमापूर्यमाणाः पापेनेवा-ध्मातमूर्तयो भवन्ति, तदवस्थाश्च वल्मीकतृणाग्रावस्थिता जल-

बिन्दव इव पतितमप्यात्मानं नावगच्छन्ति। अपरे तु स्वार्थनिष्पादनपरैः धनपिशितग्रासगृध्रैः द्यूतं विनोद इति, परदाराभिगमनं वैदग्ध्यमिति, मृगयां श्रम इति, पानं विलास इति, स्वदारपरित्यागमव्यसनितेति, गुरुवचनावधीरणं न परप्रणेयत्वमिति, नृत्तगीतवाद्यवेश्याभिसक्तिं रसिकतेति, स्वच्छन्दतां प्रभुत्वमिति, देवावमानं महासत्त्वतेति, बन्दिजनख्यातिं यश इति, तरलतामुत्साह इति, अविशेषज्ञतामपक्षपातित्वमिति दोषानपि गुणपक्षमध्यारोपयद्भिः; अन्तः स्वयमपि विहसद्भिः; धूर्तैरमानुषलोकोचिताभिः स्तुतिभिः प्रतार्यमाणा दिव्यांशावतीर्णमिव सदैवतमिव अतिमानुषमात्मानमुत्प्रेक्षमाणा आरब्धदिव्योचितचेष्टानुभावाः सर्वजनस्योपहास्यतामुपयान्ति। दर्शनप्रदानमप्यनुग्रहं गणयन्ति। दृष्टिपातमप्युपकारपक्षे स्थापयन्ति। संभाषणमपि संविभागमध्ये कुर्वन्ति। मिथ्यामाहात्म्यगर्वनिर्भराश्च न प्रणमन्ति देवताभ्यः, न पूजयन्ति द्विजातीन्, न मानयन्ति मान्यान्, नाभ्युत्तिष्ठन्ति गुरून्, जरावैक्लव्यप्रलपितमिति न पश्यन्ति वृद्धोपदेशम्, आत्मप्रज्ञापरिभव इत्यसूयन्ति सचिवोपदेशाय, कुप्यन्ति हितवादिने। सर्वथा तमभिनन्दन्ति, तं पार्श्वे कुर्वन्ति, तं संवर्धयन्ति, तेन सह सुखमवतिष्ठन्ते, तस्य वचनं शृण्वन्ति, तत्र वर्षन्ति योऽहर्निशमनवरतमुपरचिताञ्जलिरधिदैवतमिव विगताऽन्यकर्तव्यः स्तौति, यो वा माहात्म्यमुद्भावयति। किंवा तेषां असांप्रतं येषामतिनृशंसप्रायोपदेशनिर्घृणं कौटिल्यशास्त्रं प्रमाणम्, अभिचारक्रियाक्रूरैकप्रकृतयः पुरोधसो गुरवः, पराभिसंधानपरा मन्त्रिण उपदेष्टारः, सहजप्रेमार्द्रहृदयानुरक्ता भ्रातर उच्छेद्याः। तदेवंप्रायातिकुटिलचेष्टासहजदारुणे राज्यतन्त्रे अस्मिन् महामोहकारिणि च यौवने कुमार! तथा प्रयतेथा यथा नोपहस्यसे जनैः, न निन्द्यसे साधुभिः, न धिक्क्रियसे गुरुभिः, नोपालभ्यसे

सुहृद्भिः। न शोच्यसे विद्वद्भिः। यथा च न प्रकाश्यसे विटैः, न प्रतार्यसे कुशलैः, नास्वाद्यसे भुजङ्गैः, नावलुप्यसे सेवकवृकैः, न प्रलोभ्यसे वनिताभिः, न विडम्ब्यसे लक्ष्म्या, न नर्त्यसे मदेन, नोन्मत्तीक्रियसे मदनेन, नाक्षिप्यसे विषयैः। कामं भवान्प्रकृत्यैव धीरः, पित्रा च समारोपितसंस्कारः। तरलहृदयमप्रतिबुद्धं च मदयंति धनानि, तथापि भवद्गुणसंतोषो मामेवं मुखरीकृतवान्। इदमेव च पुनः पुनरभिधीयसे। विद्वांसमपि सचेतनमपि महासत्त्वमपि अभिजातमपि धीरमपि प्रयत्नवन्तमपि पुरुषमियं दुर्विनीता खलीकरोति लक्ष्मीरिति। सर्वथा कल्याणैःपित्रा क्रियमाणमनुभवतु भवान्नवराज्याऽभिषेकमङ्गलम्। कुलक्रमागतामुद्वह पूर्वपुरुषैरूढां धुरम्। अवनमय द्विषतां शिरांसि। उन्नमय स्वबन्धुवर्गम्। अभिषेकानन्तरं च प्रारब्धदिग्विजयः परिभ्रमन्विजितामपि तव पित्रा सप्तद्वीपभूषणां पुनर्विजयस्व वसुंधराम्। अयं च ते कालः प्रतापमारोपयितुम्। आरूढप्रतापो हि राजा त्रैलोक्यदर्शीव सिद्धादेशो भवति, इत्येतावदभिधायोपशशाम। उपशान्तवचसि शुकनासे चन्द्रापीडस्ताभिरुपदेशवाग्भिः प्रक्षालित इव, उन्मीलित इव, अलंकृत इव, पवित्रीकृत इव, उद्भासित इव प्रीतहृदयो मुहूर्तं स्थित्वा स्वभवनमाजगाम।

**राज्याभिषेको—दिग्विजययात्रा च**

ततः कतिपयदिवसापगमे च राजा स्वयमुत्क्षिप्तमङ्गलकलशः सह शुकनासेन पुण्येऽहनि पुरोधसा संपादिताशेषराज्याभिषेकमङ्गलम्, आनन्दबाष्पजलमिश्रेण मन्त्रपूतेन वारिणा सुतमभिषिषेच। अभिषेकसलिलाऽऽर्द्रदेहं च तं चन्द्रापीडं लतेव पादपान्तरं निजपादपममुञ्चन्त्यपि तारापीडं तत्क्षणमेव संचक्राम राज्यलक्ष्मीः। अनन्तरमखिलान्तःपुरपरिवृतया च प्रेमार्द्रहृदयया विलासवत्या स्वयमापादतलात्

आमोदिना चन्द्रातपधवलेन चन्दनेनाऽनुलिप्तमूर्तिः, इन्दुधवलं दुकूल-युगलं वसानः, पुरोहितप्रतिबद्धप्रतिसरप्रसाधितपाणिः, हारेणाऽऽलिङ्गितवक्षःस्थलः, तत्कालप्रतिपन्नवेत्रदण्डेन पित्रा स्वयं पुरःप्रारब्धसमुत्सारणः सभामण्डपमुपगम्य काञ्चनमयं शशीव मेरुशृङ्गं चन्द्रापीडः सिंहासनमारुरोह। आरूढस्य चास्य, कृतयथोचितसकलराजलोकसंमानस्य मुहूर्तं स्थित्वा दिग्विजयप्रयाणशंसी प्रलयघनघटाघोषघर्घरध्वनिः कनककोणैरभिहन्यमानः प्रस्थानदुन्दुभिरामन्थरं दध्वान। येन ध्वनता बधिरीकृतानीव रवेण भुवनान्तराणि, विश्लेषिता इव च दिशामन्योन्यबन्धसंधयः। ततो दुन्दुभिरवमाकर्ण्य जयजयेति च सर्वतः समुद्घुष्यमाणजयशब्दः सिंहासनात् सह द्विषतांश्रिया संचचाल चन्द्रापीडः। समन्तात्ससंभ्रमोत्थितैश्च अनुगम्यमानो नरपतिसहस्रैराश्थानमण्डपान्निरगात्। निर्गत्य च पूर्वारूढया पत्रलेखयाध्यासिताऽन्तरासनां उपपादितप्रस्थानसमुचितमङ्गल्यालंकारां करेणुकां आरुह्य मुक्ताफलजालिना शतशलाकेन आतपत्रेण निवार्यमाणातपो निर्गन्तुमारेभे। विनिर्गतश्च आप्तसेनापतिनिर्दिश्यमाननामभिः अवनिभुजां चक्रवालैः प्रणम्यमानः बहुलसिन्दूररेणुपाटलेन सितकुसुममालाजालशबलशिरसा मेरुगिरिणेव गन्धमादनेनानुगम्यमानः; कनकालंकारप्रभाकल्माषितावयवेन इन्द्रायुधेन सनाथीकृतपुरोभागः शनैः शनैः प्रथममेव शातक्रतवीमाशामभिप्रतस्थे।

सैन्यसमारोहः

अथ चलितगजघटाकम्पिताऽऽतपत्रवनम्, अनेककल्लोलपरंपरापतितचन्द्रमण्डलप्रतिबिम्बसहस्रं महाप्रलयजलधिजलमिव प्लावितमहीतलम्, उद्भूतकलकलमखिलं संचचाल बलम्। उच्चलितस्य चास्य स्वभवनादुपपादितप्रस्थानमङ्गलो धवलदुकूलवासाः सितकुसुमाङ्गरागो महता बलसमूहेन नरेन्द्रवृन्दैश्चानुगम्यमानो धृतधवलातपत्रो द्वितीय इव युवराजस्त्वरितपद-

संचारिण्या करिण्या वैशम्पायनः समीपमाजगाम। अनन्तरमितश्चेतश्च 'निर्गतो युवराजः' इति समाकर्ण्य प्रधावतां बलानां भरेण तत्क्षण-माचकम्पे मेदिनी। क्षणेन च तुरगमयमिव महीतलम्, कुञ्जरमयमिव दिक्चक्रवालम्, आतपत्रमण्डलमयमिवान्तरिक्षम्, ध्वजवनमयमिवा-म्बरतलम्, इभमदगन्धमय इव समीरणः, भूपालमयीव प्रजासृष्टिः, आभरणांशुमयीव दृष्टिः, जयशब्दमयमिव त्रिभुवनमभवत्। बलकोला-हलभीता इव धवलध्वजनिवहनिरन्तरावृता ययुः क्वापि दश दिशः। प्रबलवेत्रिवेत्रलतासमुत्सार्यमाणा इव तुरगखुररजोधूसरताभीताऽर्क-किरणा मुमुचुः पुरोभागम्। इभकरसीकरनिर्वापणत्रस्त इवाऽऽतपत्र-संछादितातपो दिवसो ननाश। बलभरजर्जरीकृता मदकलकरिचरण-शतखण्डिता क्षितीयेव प्रयाणभेरी भैरवं भूमीरराम। मङ्गलशङ्ख-शब्दसंवर्धितध्वनीनां च प्रयाणपटहानां निनादेन, मुहुर्मुहुरितस्तत-स्ताड्यमानानां च डिण्डिमानां निःस्वनेन, जर्जरीकृतश्रवणपुटस्य मूर्च्छेवाभवज्जनस्य। शनैः शनैश्च बलसंक्षोभजन्मा त्रिपथगाप्रवाह इव हरिचरणप्रभवः, कुपित इव मुञ्चन्क्षमाम्, आरब्धपरिहास इव रुन्धन्नयनानि, उत्पातराहुरिव दिवसकरमण्डलमकाण्ड एव पिबन्, क्रकचकृत चन्दनक्षोदधूसरो रेणुरुत्पपात। नरपालबलभरमसहमाना पुनरिव भारावतारणार्थममरलोकमारुरोह रजोमिषेण मही। मुहू-र्तेन च गर्भवासमिव, कृतान्तजठरमिव, महाकालमुखमिव, नाराय-णोदरमिव, विवेश पृथिवी। मृन्मयइव बभूव दिवसः। एकमहाभूत-मयमिव त्रैलोक्यमासीत्।

वैशम्पायनस्यतारापीडप्रताप-वर्णनं शिबिरसन्निवेशश्च

अथ दन्तिनां दिशि दिशि कर-विवरनिःसृतैः शीकरासारैः, हेपारव-विप्रकीर्णैश्च वाजिनां लालाजललव-जालकैरुपशमिते रजसि, पुनरपि जातालोकासु दिक्षु, सागरादिवो-

न्मग्रमालोक्य तदपरिमाणं बलमुपजातविस्मयः सर्वतोदत्तदृष्टिर्वैशम्पायनश्चन्द्रापीडमाबभाषे—'युवराज, किं न जितं देवेन महाराजाधिराजेन तारापीडेन यज्जेष्यसि, का दिशो न वशीकृता या वशीकरिष्यसि, कानि दुर्गाणि न प्रसाधितानि यानि प्रसाधयिष्यसि, कानि रत्नानि नोपार्जितानि यान्युपार्जयिष्यसि, के वा न प्रणता राजानः। एते हि चतुरुदधिजलावगाहदुर्ललितबलमदावलिप्ताः कुलाभिमानशालिनः सोमपायिनः मूर्धाभिषिक्ताः चूडामणिपल्लवैः उद्वहन्ति मङ्गल्यां भवच्चरणरजःसंहतिम्। एतानि चाप्यमीषां आप्लावितदशदिगन्तरालानि सैन्यानि भवन्तमुपासते। तथाहि—पश्य पश्य यस्यां यस्यां दिशि विक्षिप्यते चक्षुस्तस्यां तस्यां रसातलमिवाद्गिरति, वसुधेव सूते, ककुभ इव वमन्ति, गगनमिव वर्षति, दिवस इव सृजति बलानि। अपरिमितबलभराक्रान्ता मन्ये स्मरति महाभारतसमरसंक्षोभस्याद्य क्षितिः। एष शिखरदेशेषु स्खलितमण्डलो-ध्वजान्गणयन्निव कुतूहलाद्भ्रमति कदलिकावनान्तरेषु मयूखमाली। सर्वथा चित्रं यन्नाद्य विघटितसकलकुलशैलसंधिबन्धा सहस्रशः शकलीभवति बलभरेण धरित्री, इत्येवं वदत एव तस्य युवराजः समुच्छ्रितानेकतोरणां, तृणमयप्राकारमन्दिरसहस्रसंबाधां, उल्लासितधवलपटमण्डपशतशोभिनीं, आवासभूमिमवाप। तस्यां चावतीर्य राजवत्सर्वाः क्रियाश्चकार। अतिवाहितदिवसश्च यामिनीमपि स्वशयनीयस्य नातिदूरनिहितशयननिषण्णेन वैशम्पायनेन, अन्यतश्च समीपे क्षितितलविन्यस्तकुथप्रसुप्तया पत्रलेखया सह, अन्तरा पितृसक्तम्, अन्तरा मातृसंबद्धम्, अन्तरा शुकनासमयं कुर्वन्नालापं नातिजातनिद्रः प्रायेण जाग्रदेव निन्ये।

सकललोकविजयः।

प्रत्यूषे चोत्थाय तेनैव क्रमेणाऽनवरत-प्रयाणकैः प्रतिप्रयाणकमुपचीयमानेन सेनासमुदायेन जर्जरयन्वसुधराम् , आकम्पयन्गिरीन् , उत्सिञ्चन्सरितः, रिक्तीकुर्वन्सरांसि, चूर्णयन्काननानि, समीकुर्वन् विषमाणि, दलयन्दुर्गाणि, पूरयन्निम्नानि, निम्नयन्स्थलानि प्रातिष्ठत। शनैः शनैश्च स्वेच्छया परिभ्रमन् , नमयन्नुन्नतान् , उन्नमयन्नवनतान्, आदिशन्देशव्यवस्थाम् , स्थापयन्स्वचिन्हानि, लेखयन् शासनानि, प्रणमन् मुनीन् , पालयन्नाश्रमान् , आरोपयन्प्रतापम्, उपचिन्वन् यशः, आमृद्नंश्च वेलावनानि , बलरेणुभिराधूसरीकृतसकलसागरसलिलः पृथिवीं विचचार । प्रथमं प्राचीम् , ततस्त्रिशङ्कुतिलकाम् , ततो-वरुणलाञ्छनाम् , अनन्तरं च सप्तर्षितारशबलां दिशं विजिग्ये । वर्ष-त्रयेण चात्मीकृताशेषद्वीपान्तरं सकलमेव बभ्राम महीमण्डलम्। ततः क्रमेण कदाचित्कैलाससमीपचारिणां हेमकूटधाम्नां किरातानां सुवर्णपुरं नाम निवासस्थानं नातिविप्रकृष्टं पूर्वजलनिधेः जित्वा जग्राह। तत्र च निखिलधरणीतलपर्यटनखिन्नस्य निजबलस्य विश्रामहेतोः कतिपयान्दिवसानतिष्ठत् ।

चन्द्रापीडस्य किन्नरमिथुनानुसरणं, मार्गं विस्मृत्य विषादश्च

एकदा तु तत्रस्थ एवेन्द्रायुधमारुह्य मृगयानिर्गतो विचरन्कानने शैलशिखरादवतीर्णं यदृच्छया किन्नर-मिथुनमद्राक्षीत् । अपूर्वतया तस्य तु समुपजातकुतूहलः कृतग्रहणाभिलाषः समुपसर्पन् अदृष्टपूर्वपुरुषदर्शन-त्रासप्रधावितं च तत्पलायमानमनुसरन् अनवरतपार्ष्णिप्रहारद्विगुणी-कृतजवेनेन्द्रायुधेनैकाकी निर्गत्य बलसमूहात्सुदूरमनुससार । 'अत्र गृह्यते, इदं गृहीतम्' इत्यतिरभसाकृष्टचेता महाजवतया तुरंगमस्य

मुहूर्तमात्रेणैव तस्मात्प्रदेशात्पञ्चदशयोजनमात्रमध्वानं जगाम। तच्चानुबध्यमानमालोकयत एवास्य संमुखापतितमचलतुङ्गशिखरमारुरोह। आरूढे च तस्मिञ्शनैः शनैस्तदनुसारिणीं निवर्त्य दृष्टिम्, अचलशिखरप्रस्तरप्रतिहतगतिप्रसरो विधृततुरङ्गश्चन्द्रापीडस्तस्मिन्काले समुपारूढश्रमस्वेदार्द्रशरीरमिन्द्रायुधमात्मानं चालोक्य क्षणमिव विचार्य स्वयमेव विहस्याचिन्तयत्–'किमिति निरर्थकमयमात्मा मया शिशुनेवायासितः। किमनेन गृहीतेनागृहीतेन वा किंनरयुगलेन प्रयोजनम्। यदि गृहीतमिदं ततः किम्, अथ न गृहीतं ततोऽपि किम्। अहो मे मूर्खतायाः प्रकारः अहो यत्किंचनकारितायामादरः। अहो निरर्थकव्यापारेष्वभिनिवेशः। साधुफलं कर्म क्रियमाणं वृथा जातम्। अवश्यकर्तव्या क्रिया प्रस्तुता विफलीभूता। राजधर्मः प्रवर्तितो न निष्पन्नः। गुर्वर्थः प्रारब्धो न परिसमाप्तः। कस्मादहमाविष्ट इवोत्सृष्टनिजपरिवार एतावतीं भूमिमायातः। कस्माच्च मया निष्प्रयोजनमिदमनुसृतमश्वमुखद्वयमिति विचार्यमाणे सति अयमात्मैव मे पर इव हासमुपजनयति। न जाने कियताध्वना विच्छिन्नमितो बलमनुयायि मे। महाजवो हीन्द्रायुधो निमेषमात्रेणातिदूरमतिक्रामति। न चागच्छता मया तुरगवेगवशात्किंनरमिथुने बद्धदृष्टिना अस्मिन्नविरलतरुशतशाखागुल्मलतासंतानगहने महावने पन्था निरूपितो येन प्रतिनिवृत्त्य यास्यामि। श्रुतं हि मया बहुशः कथ्यमानम्–उत्तरेण सुवर्णपुरं सीमान्तलेखा पृथिव्याः सर्वजनपदानाम्, ततः परतो निर्मानुषमरण्यम्, तच्चातिक्रम्य कैलासगिरिरिति'। अयं च कैलासः। तदिदानीं प्रतिनिवृत्त्यैकाकिना स्वयमुत्प्रेक्ष्योत्प्रेक्ष्य दक्षिणामाशां केवलमङ्गीकृत्य गन्तव्यम्। आत्मकृतानां हि दोषाणां नियतमनुभवितव्यं फलमात्मनैव, इत्यवधार्य वामकरतलचलितरश्मिपाशस्तुरंगमं व्यावर्तयामास।

**अच्छोद सरोवर-दर्शनम्**

निवर्तिततुरंगमश्च पुनश्चिन्तितवान्—'अयमुद्भासितप्रभाभास्वरो भगवान्भानुरधुना नभस्तलमध्यमलंकरोति । परिश्रान्तश्चायमिन्द्रायुधः । तदेनं तावदागृहीतकतिपयदूर्वाप्रवालकवलं कस्मिंश्चित्सरसि शिलाप्रस्रवणे वा सरिदम्भसि वा स्नातपीतोदकमपनीतश्रमं कृत्वा स्वयं च सलिलं पीत्वा कस्यचित्तरोरधश्छायायां मुहूर्तमात्रं विश्रम्य ततो गमिष्यामि' इति चिन्तयित्वा सलिलमन्वेषमाणो मुहुर्मुहुरितस्ततो दत्तदृष्टिः पर्यटन्नलिनीजलाऽवगाहोत्थितस्य अचिरादपक्रान्तस्य महतो गिरिचरस्य वनगजयूथस्य चरणोत्थापितैः पङ्कपटलैरार्द्रीकृतम्, मार्गमद्राक्षीत् । उपजातजलाशयशङ्कश्च तं प्रतीपमनुसरन् उपरिछत्रमण्डलाकारैः सरलसालसल्लकीप्रायैः पादपैरुपेतेन, स्थूलकपिलवालुकेन, पाषाणभेदकमञ्जरीभिर्जटिलीकृतशिलान्तरालेन वनमानुषमिथुनाध्यासिततटगुहामुखेन गन्धपाषाणपरिमलामोदिना, कैलासतटेन कंचिदध्वानं गत्वा पूर्वोत्तरे दिग्भागे जलभारालसं जलधरव्यूहमिव अत्यायतं तरुखण्डं ददर्श । संमुखागतेन शीकरिणा जलतरङ्गमारुतेन आलिङ्ग्यमान इव कमलमधुपानमत्तानां कलहंसानां कोलाहलैराहूयमान इव च तं विवेश । प्रविश्य च तस्य तरुखण्डस्य मध्यभागे मणिदर्पणमिव त्रैलोक्यलक्ष्म्याः, त्रिभुवनपुण्यराशिमिव सरोरूपेणावस्थितम्, शरदभ्रवृन्दमिव द्रवीभूयैकत्र निस्यन्दितम्, मुनिमनोभिरिव सज्जनगुणैरिव हरिणलोचनप्रभाभिरिव मुक्ताफलांशुभिरिव निर्मितम्, आपूर्णपर्यन्तमप्यन्तः स्पष्टदृष्टसकलवृत्तान्ततया रिक्तमिवोपलक्ष्यमाणम्, यौवनमिवोत्कलिकाबहुलम्, महापुरुषमिव मीनमकरकूर्मचक्रप्रकटलक्षणम्, भारतमिव पाण्डुधार्तराष्ट्रकुलपक्षक्षतक्षोभम्, अमृतमथनसमयमिव तीरावस्थितशितिकण्ठपीयमानविषम्, दिव्यमिवा-

निमिषलोचनरमणीयम्, अरण्यमिव विजृम्भमाणपुण्डरीकम्, अतिमनोहरमाह्लादनं दृष्टेरच्छोदं नाम सरो दृष्टवान्। आलोकमात्रेणैवापगतश्रमो दृष्ट्वा मनस्येवमकरोत्–'अहो निष्फलमपि मे तुरङ्गमुखमिथुनानुसरणमेतदालोकयतः सरः सफलतामुपगतम्। अद्य परिसमाप्तमीक्षणयुगलस्य द्रष्टव्यदर्शनफलम्, आलोकितः खलु रमणीयानामन्तः, दृष्ट आह्लादनीयानामवधिः, प्रत्यक्षीकृता प्रीतिजननानां परिसमाप्तिः, इदमुत्पाद्य सरःसलिलम् अमृतरसमुत्पादयता वेधसा पुनरुक्ततामिव नीता स्वसृष्टिः। इदमपि खल्वमृतमिव सर्वेन्द्रियाह्लादनसमर्थम्, अतिविमलतया चक्षुषः प्रीतिमुपजनयति, शिशिरतया स्पर्शसुखमुपहरति, कमलसुगन्धितया घ्राणमाप्याययति, हंसमुखरतया श्रुतिमानन्दयति, स्वादुतया रसनामाह्लादयति। नियतं चास्यैव दर्शनतृष्णया न परित्यजति भगवान्कैलासनिवासव्यसनमुमापतिः। न खलु सांप्रतमाचरति जलशयनदोहदं देवो रथाङ्गपाणिर्यदिममृतरससुरभिसलिलमपहाय लवणरसपरुषपयस्युदन्वति स्वपिति।

विश्रामः, दूरात्संगीतध्वनिं निशम्य तदनुसरणं च।

इति विचारयन्नेव तस्य शिलाशकलकर्कशवालुकाप्रायम्, दक्षिणतीरमासाद्य तुरगादवततार। अवतीर्य च व्यपनीतपर्याणमिन्द्रायुधमकरोत्। क्षितितललुठितोत्थितं च गृहीतकतिपययवसग्रासं सरोऽवतीर्य पीतसलिलमिच्छया स्नातं चोत्थाप्य अन्यतमस्य समीपवर्तिनस्तरोर्मूलशाखायामपगतखलीनं बद्ध्वा स्वयमपि सलिलमवततार। ततश्च प्रक्षालितकरयुगलश्चातक इव कृत्वा जलमयमाहारम्, सरःसलिलादुदगात्। प्रत्यग्रभग्नशिशिरैश्च कमलिनीपलाशैर्लतामण्डपपरिक्षिप्ते शिलातले स्रस्तरमास्तीर्य, निधाय शिरसि पिण्डीकृतमुत्तरीयं, निषसाद। मुहूर्तं विश्रान्तश्च तस्य

सरस उत्तरे तीरप्रदेशे समुच्चरन्तं, उन्मुक्तकवलेन निश्चल-श्रवणपुटेन तन्मुखीभूतेनोद्ग्रीवेणेन्द्रायुधेन प्रथममाकर्णितं, श्रुतिसुभगं, वीणातन्त्रीझंकारमिश्रम् अमानुषं गीतशब्दमशृणोत् । श्रुत्वा च कुतोऽत्र विगतमर्त्यसंपाते प्रदेशे गीतध्वनेः संभूतिरिति समुपजातकौतुकः कमलिनीदलसंस्तरादुत्थाय तामेव गीतसंपातसूचितां दिशं चक्षुः प्राहिणोत् । अतिदवीयस्तया तु तस्य प्रदेशस्य प्रयत्नव्यापृतलोचनोऽपि विलोकयन्न किंचिद्ददर्श । तमेव केवलमनवरतं शब्दं शुश्राव । कुतूहलवशाच्च गीतध्वनिप्रभव-जिज्ञासया कृतगमनबुद्धिर्दत्तपर्याणमिन्द्रायुधमारुह्य प्रियगीतैः प्रथम-प्रस्थितैरप्रार्थितैरपि वनहरिणैरुपदिश्यमानवर्त्मा पश्चिमया वनलेखया निमित्तीकृत्य तं गीतध्वनिमभिप्रतस्थे ।

### सिद्धायतने दिव्यकन्यकाऽवलोकनम् ।

क्रमेण च संमुखागतैः, अच्छनिर्झर-जलकणजालजनितजडिमभिः, नमेरुकुसुम-पांसुपातिभिः पुण्यैः कैलासमारुतैः अभिनन्द्यमानो गत्वा च तं प्रदेशं सर्वतो मरकतहरितैः, हारिहारीतरुति-रमणीयैः, उन्मदकोकिलकुलकवलीकृतसहकारकोमलाग्रपल्लवैः, उन्मदषट्चरणचक्रवालवाचालितविकचचूतकलिकैः, चम्पक-परागपुञ्जपिञ्जरकपिञ्जलजग्धपिप्पलीफलैः, प्रक्रीडितकपिकुलकरतल-ताडनतरलिततालीपुटैः, अन्योन्यकुपितकपोतपक्षपालीपालितकुसुमैः, कुसुमरजोराशिशारशारिकाश्रितशिखरैः, शुकशतमुखनखशिखरशकलि-तफलस्फीतैः, आरब्धपञ्चतपःक्रियैरिवोच्छिखशिखिमण्डलपरिवृतैः, दीक्षितैरिव कृतकृष्णसारविषाणकण्डूयनैः, इन्द्रजालिकैरिव दृष्टिहारिभिः पादपैः परिवृतं, चन्द्रप्रभनाम्नस्तस्य सरसः पश्चिमे तीरे संनिविष्टं, भगवतः शूलपाणेः शून्यं सिद्धायतनमपश्यत् । तच्च प्रविश्या-

द्राक्षीच्चतुःस्तम्भस्फटिकमण्डपिकातलप्रतिष्ठितम्, अचिरोद्धृतैरार्द्रार्द्रैः शुचिभिर्मन्दाकिनीपुण्डरीकैः कृतार्चनम्, अशेषत्रिभुवनवन्दितचरणम्, चराचरगुरुम्, भगवन्तं त्र्यम्बकम्। तस्य च दक्षिणां मूर्तिमाश्रित्याभिमुखीमासीनाम्, उपरचितब्रह्मासनाम्, अतिविस्तारिणा दीर्घकालसंचितेन तपोराशिनेव सर्वतो विसर्पता धवलदेहप्रभावितानेन सगिरिकाननं चन्द्रमयमिव तं प्रदेशं कुर्वतीम्, अन्यथैव धवलयन्तीं कैलासगिरिम्, पञ्चमहाभूतमयमपहायोपकरणकलापं धवलगुणेनैव केवलेनोत्पादिताम्, रतिमिव मदनदेहनिमित्तं हरप्रसादनार्थमागृहीतहराराधनाम्, त्रयीमिव कलियुगध्वस्तधर्मशोकगृहीतवनवासाम्, श्वेतद्वीपलक्ष्मीमिवान्यद्वीपावलोकनकुतूहलागताम्, काशकुसुमविकासकान्तिमिव शरत्समयमुदीक्षमाणाम्, धर्महृदयादिव विनिर्गताम्, मृणालैरिव विरचितावयवाम्, दन्तदलैरिव घटिताम्, इयत्तामिव धवलिम्नः, स्कन्धावलम्बिनीभिरुन्मिषत्तडित्तरलतेजस्ताम्राभिर्जटाभिरुद्भासितशिरोभागाम्, ब्रह्मसूत्रेण पवित्रीकृतकायाम्, आप्रपदीनेन च स्वभावसितेन दुकूलपटेन प्रावृतनितम्बाम्, उत्सङ्गगतां च दन्तमयीं दक्षिणकरेण वीणामास्फालयन्तीम्, प्रत्यक्षामिव गन्धर्वविद्यां, मणिमण्डपिकास्तम्भलग्नाभिरात्मानुरूपाभिः सहचरीभिरिव सवीणाभिर्विलासवतीभिः प्रतिमाभिरुपेताम्, गीत्या देवं विरूपाक्षमुपवीणयन्तीम्, निर्ममाम्, निरहंकाराम्, निर्मत्सराम्, अमानुषाकृतिम्, दिव्यत्वादपरिज्ञायमानवयःपरिमाणामप्यष्टादशवर्षदेशीयामिवोपलक्ष्यमाणाम्, प्रतिपन्नपाशुपतव्रतां कन्यकां ददर्श। ततोऽवतीर्य, तरुशाखायां बद्ध्वा तुरङ्गमं, उपसृत्य भगवते भक्त्या प्रणम्य त्रिलोचनाय, तामेव दिव्ययोषितमनिमिषपक्ष्मणा चक्षुषा पुनः पुनर्निरूपयामास। उदपादि चास्य तस्या रूपसंपदा कान्त्या प्रशान्त्या चाविर्भूतविस्मयस्य मनसि—'अहो जगति जन्तूनामसमर्थितोपन-

तान्यापतन्ति वृत्तान्तान्तराणि। तथा हि— मया मृगयायां यदृच्छया निरर्थकमनुबध्नता तुरङ्गमुखमिथुनमयमतिमनोहरो मानवानामगम्यो दिव्यजनसंचरणोचितः प्रदेशो वीक्षितः। अत्र च सलिलमन्वेषमाणेन हृदयहारि सरो दृष्टम्। तत्तीरलेखाविश्रान्तेन चाऽमानुषं गीतमाकर्णितम्। तच्चानुसरता मानुषदुर्लभदर्शना दिव्यकन्यकेयमालोकिता। न हि मे संशीतिरस्या दिव्यतां प्रति। आकृतिरेवानुमापयत्यमानुषताम्। कुतश्च मर्त्यलोके संभूतिरेवंविधानां गान्धर्वध्वनिविशेषाणाम्। तद्यदि मे सहसा दर्शनपथान्नापयाति, नोत्पतति वा गगनतलम्, ततः 'का त्वम्, किमभिधाना वा किमर्थं वा प्रथमे वयसि प्रतिपन्ना व्रतम्' इति सर्वमेवैतदेनामुपसृत्य पृच्छामि। अतिमहानयमवकाश आश्चर्याणाम्, इत्यवधार्य तस्यामेव स्फटिकमण्डपिकायामन्यतमं स्तम्भमाश्रित्य समुपविष्टो गीतसमाप्त्यवसरं प्रतीक्षमाणस्तस्थौ।

**कन्यकाकृतं चन्द्रापीडाऽऽतिथ्यम्**

अथ गीतावसाने मूकीभूतवीणा सा कन्यका समुत्थाय प्रदक्षिणीकृत्य कृतहरप्रणामा परिवृत्य चन्द्रापीडमाबभाषे—'स्वागतमतिथये। कथमिमां भूमिमनुप्राप्तो महाभागः। तदुत्तिष्ठ। आगम्यताम्। अनुभूयतामतिथिसत्कारः' इति। एवमुक्तश्च तया संभाषणमात्रेणैवानुगृहीतमात्मानं मन्यमान उत्थाय भक्त्या कृतप्रणामः 'भगवति! यथाज्ञापयसि' इत्यभिधाय दर्शितविनयः शिष्य इव तां व्रजन्तीमनुवव्राज। व्रजंश्च समर्थयामास—'हन्त, तावन्नेयं मां दृष्ट्वा तिरोभूता। कृतं हि मे कुतूहलेन प्रश्नाशया हृदि पदम्। यथा चेयमस्यास्तपस्विजनदुर्लभदिव्यरूपाया अपि दाक्षिण्यातिशया प्रतिपत्तिरभिजाता विभाव्यते, तथा संभावयामि नियतमियमखिलमात्मोदन्तम-

भ्यर्थ्यमाना मयी कथयिष्यति' इत्येवं च कृतमतिः पदशतमात्रमिव गत्वा निरन्तरैर्दिवापि रजनीसमयमिव दर्शयद्भिस्तमालतरुभिरन्धकारितपुरोभागाम्, हिमहारहरहासधवलैश्चोभयतः क्षरद्भिर्निर्झरैर्द्वारावलम्बितचलच्चामरकलापामिवोपलक्ष्यमाणाम्, अन्तःस्थापितमणिकमण्डलुमण्डलाम्, शङ्खमयेन भिक्षाकपालेनाधिष्ठिताम्, गुहामद्राक्षीत्। तस्याश्च द्वारि शिलातले समुपविष्टो वल्कलशयनशिरोभागविन्यस्तवीणां ततः पर्णपुटेन निर्झरादागृहीतमर्घ्यजलमादाय तां कन्यकां समुपस्थिताम् 'अलमतियन्त्रणया। कृतमतिप्रसादेन। भगवति, प्रसीद। विमुच्यतामयमत्यादरः। त्वदीयमालोकनमपि सर्वपापप्रशमनमघमर्षणमिव पवित्रीकरणायालम्। आस्यताम्' इत्यब्रवीत्। अनुबध्यमानश्च तया तां सर्वामतिथिसपर्यामतिदूरावनतेन शिरसा सप्रश्रयं प्रतिजग्राह। कृतातिथ्यया च तया द्वितीयशिलातलोपविष्टया क्षणमिव तूष्णीं स्थित्वा क्रमेण परिपृष्टो दिग्विजयादारभ्य किंनरमिथुनानुसरणप्रसङ्गेनागमनमात्मनः सर्वमाचचक्षे। विदितसकलवृत्तान्ता चोत्थाय सा कन्यका भिक्षाकपालमादाय तेषामायतनतरूणां तलेषु विचचार। अचिरेण च तस्याः स्वयं पतितैः फलैरपूर्यत भिक्षाभाजनम्। आगत्य च तेषां फलानामुपयोगाय नियुक्तवती चन्द्रापीडम्। आसीच्च तस्य चेतसि—'नास्ति खल्वसाध्यं नाम तपसाम्। किमतःपरमाश्चर्यं यदत्र व्यपगतचेतना अपि सचेतना इवास्यै भगवत्यै समतिसृजन्तः फलान्यात्मानुग्रहमुपपादयन्ति वनस्पतयः। चित्रमिदमालोकितमस्माभिरदृष्टपूर्वम्' इत्यधिकतरोपजातविस्मयश्चोत्थाय तमेव प्रदेशमिन्द्रायुधमानीय व्यपनीतपर्याणं नातिदूरे संयम्य निर्झरजलनिर्वर्तितस्नानविधिस्तान्यमृतस्वादून्युपभुज्य फलानि पीत्वा च तुषारशिशिरं प्रस्रवणजलमुपस्पृश्य चैकान्ते तावदवतस्थे यावत्तयापि कन्यकया कृतो जलफलमूलमयेष्वाहारेषु प्रणयः।

चन्द्रापीडस्य कन्यका-
विषये जिज्ञासा

अथ परिसमापिताहारां निर्वर्तितसंध्योचिताचारां शिलातले विश्रब्धमुपविष्टां निभृतमुपसृत्य नातिदूरे समुपविश्य मुहूर्तमिव स्थित्वा चन्द्रापीडः सविनयमवादीत्—'भगवति' त्वत्प्रसादप्राप्तिप्रोत्साहितेन कुतूहलेनाकुलीक्रियमाणो, मानुषतासुलभो लघिमा बलादनिच्छन्तमपि मां प्रश्नकर्मणि नियोजयति। उपजनयति हि प्रभुप्रसादलवोऽपि प्रागल्भ्यमधीरप्रकृतेः। स्वल्पाप्येकदेशावस्थाने कालकला परिचयमुत्पादयति। अणुरप्युपचारपरिग्रहः प्रणयमारोपयति। तद्यदि नातिखेदकरमिव ततः कथनेनात्मानमनुग्राह्यमिच्छामि। अतिमहत्खलु भवद्दर्शनात्प्रभृति मे कौतुकमस्मिन्विषये। कतरन्मरुतामृषीणां गन्धर्वाणां गुह्यकानामप्सरसां वा कुलमनुगृहीतं भगवत्या जन्मना। किमर्थं वास्मिन्कुसुमसुकुमारे नवे वयसि व्रतग्रहणम्। क्वेदं वयः, क्वेयमाकृतिः, क्वाऽयं लावण्यातिशयः, क्व चेयमिन्द्रियाणामुपशान्तिः। तदद्भुतमिव मे प्रतिभाति। किं सुरलोकसुलभान्यपहाय दिव्याश्रमपदान्येकाकिनी वनमिदममानुषमधिवससि। कश्चायं प्रकारो यत्तैरेव पञ्चभिर्महाभूतैरारब्धमीदृशं धवलतां धत्ते ते शरीरम्। नेदमस्माभिरन्यत्र दृष्टश्रुतपूर्वं वा। अपनयतु नः कौतुकम्। आवेदयतु भवती सर्वमिदम्' इत्येवमभिहिता सा किमप्यन्तर्ध्यायन्ती तूष्णीं मुहूर्तमिव स्थित्वा निःश्वस्य स्थूलस्थूलैः, अच्छाच्छैः, अमलकपोलस्थलस्खलितैः, अवशीर्णहारमुक्ताफलतरलपातैः, वल्कलावृतकुचशिखरजर्जरितसीकरैः, अश्रुभिरामीलितलोचना निःशब्दं रोदितुमारेभे।

तां च प्ररुदितां दृष्ट्वा चन्द्रापीडस्तत्क्षणमचिन्तयत्—'अहो दुर्निवारता व्यसनोपनिपातानाम्, यदीदृशीमप्याकृतिमनभिभवनीयामात्मीयां कुर्वन्ति। सर्वथा न कंचन न स्पृशन्ति शरीरधर्माणमुपतापाः। बलवती हि द्वंद्वानां प्रवृत्तिः। इदमपरमधिकतरं जनितमतिमहन्मनसि मे कौतुक-

मस्याः बाष्पसलिलपातेन । न ह्यल्पीयसा शोककारणेन क्लेशीक्रियन्ते एवंविधा मूर्तयः । न हि क्षुद्रनिर्घातपाताभिहता चलति वसुधा' इति संवर्धितकुतूहलश्च शोकस्मरणहेतुतामुपगतम् अपराधिनमिवात्मानम् अवगच्छन् उत्थाय प्रस्रवणात् अञ्जलिना मुखप्रक्षालनोदकमुपनिन्ये । सा तु तदनुरोधादविच्छिन्नबाष्पजलधारासंतानापि किंचित्कषायितोदरे प्रक्षाल्य लोचने वल्कलोपान्तेन वदनमपमृज्य दीर्घमुष्णं च निःश्वस्य शनैः शनैः प्रत्यवादीत्—

## * महाश्वेतायाः स्वपूर्ववृत्तान्त निवेदनम् *

**वंशपरिचय जन्मादि-वर्णनम्**

'राजपुत्र, किमनेनातिनिर्घृणहृदयाया मम मन्दभाग्यायाः पापाया जन्मनः प्रभृति वैराग्यवृत्तान्तेनाऽश्रवणीयेन श्रुतेन । तथापि यदि महत्कुतूहलं तत्कथयामि । श्रूयताम् । एतत्प्रायेण कल्याणाभिनिवेशि नः श्रुतिविषयमापतितमेव यथा विबुधसद्मन्यप्सरसो नाम कन्यकाः सन्तीति । तासां चतुर्दश कुलानि । एकं भगवतः कमलयोनेर्मनसः समुत्पन्नम्, अन्यद्वेदेभ्यः संभूतम्, अन्यदग्नेरुद्भूतम्, अन्यदमृतान्मथ्यमानादुत्थितम्, अन्यज्जलाज्जातम् अन्यदर्ककिरणेभ्यो निर्गतम्, अन्यत्सोमरश्मिभ्यो निपतितम्, अन्यद्भूमेरुद्भूतम्, अन्यत्सौदामिनीभ्यः प्रवृत्तम्, अन्यन्मृत्युना निर्मितम्, अपरं मकरकेतुना समुत्पादितम्, अन्ये तु दक्षस्य प्रजापतेरतिप्रभूतानां कन्यकानां मध्ये ये द्वे सुते मुनिररिष्टा च बभूवतुस्ताभ्यां गन्धर्वैः सह कुलद्वयं जातम् । एवमेतानि एकत्र चतुर्दश कुलानि । गन्धर्वाणां तु दक्षात्मजाद्वितयसंभवं तदेव कुलद्वयं जातम् । तत्र मुनेस्तनयः चित्रसेनादीनां पञ्चदशानां भ्रातॄणामधिको गुणैः षोडशश्चित्ररथो नाम समुत्पन्नः । स किल सर्वेषां गन्धर्वाणामाधिपत्यं शैशव एवालभत ।

